सौम्यः सोमात्मजेऽनुग्रे मानोज्ञे सोमदैवते ॥ ३९२ ॥
सौम्याः पुनर्मृगशिरःशिरःस्थाः पञ्च तारकाः ।
हार्यः कलिद्रौ हर्तव्ये हृद्यं धवलजीरके ॥ ३९३ ॥
हृत्प्रिये हृद्गिते हृज्जे हृद्या तु वृद्धिभेषजे ।
हृद्यस्तु वशकृन्मंत्रे—

इति द्विस्वरयान्ताः ।

अग्रं पुरः प्रथमेऽधिके ॥ ३९४ ॥
उपर्यालम्बने श्रेष्ठे परिमाणे पलस्य च ।
भिक्षाप्रकारे संज्ञाते[1] प्रान्तेऽप्यद्रिस्तु पर्वते ॥ ३९५ ॥
सूर्ये शाखिनि, चाभ्रं तु त्रिदिवे गगनेऽम्बुदे ।
अस्रः शिरसिजे कोणे स्यादस्रं शोणितेऽश्रुणि ॥ ३९६ ॥
अस्त्रं चापे प्रहरणेऽप्यङ्घ्रिः पादद्रुमूलयोः ।
अरो जिने,ऽरं चक्राङ्गे शीघ्रशीघ्रगयोरपि ॥ ३९७ ॥
आरो नीतिः शनिर्भौम आरा चर्मप्रभेदिनी ।
इराऽम्भोवाक्सुराभूमिष्विन्द्रः शक्रेऽन्तरात्मनि ॥ ३९८ ॥
आदित्ये योगभेदे च स्यादिन्द्रा तु फणिज्झके ।
उग्रः क्षत्रियतः शूद्रासूनावुत्कटरुद्रयोः ॥ ३९९ ॥
उग्रा वचाछिक्किकयोरुस्रा गवोपचित्रयोः ।
उस्रो मयूखे, स्यादुष्ट्री मृद्भाण्डे करभस्त्रियाम् ॥ ४०० ॥
ऐन्द्रिरिन्द्रसुते काकेऽप्योड्रा जनपदान्तरे ।
ओड्रो जने जपावृक्षे करः प्रत्यायशुण्डयोः ॥ ४०१ ॥
रश्मौ वर्षोपले पाणौ क्षरो मेघे क्षरं जले ।
कद्रुः कनकपिङ्गे स्यात्कद्रूस्तु नागमातरि ॥ ४०२ ॥
कारो बलौ वधे यत्ने हिमाद्रौ निश्चये यतौ ।
कारा बन्धनशालायां बन्धे दूत्यां प्रसेवके ॥ ४०३ ॥
स्याद्धेमकारिकायां च क्षारः काचे रसे गुडे ।
भस्मनि धूर्तलवणे कारिः शिल्पी क्रियाऽपि च ॥ ४०४ ॥

१. संधाने ।

कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि ।
कीरः शुके जनपदे क्षीरं पानीयदुग्धयोः ॥ ४०५ ॥
क्षुरो गोक्षुरके कोकिलाक्षे छेदनवस्तुनि ।
क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः ॥ ४०६ ॥
क्षुद्रा व्याघ्रीनटीव्यङ्गाबृहतीसरघासु च ।
चाङ्गेरिकायां हिंस्रायां मक्षिकामात्रवेश्ययोः ॥ ४०७ ॥
कुरुः स्या[1]दोदने भूपभेदे श्रीकण्ठजाङ्गले ।
क्रूरा नृशंसघोरोष्णकठिनाः, कृच्छ्रमंहसि ॥ ४०८ ॥
कष्टे सान्तपने, क्षेत्रं भारतादौ भगाङ्गयोः ।
केदारे सिद्धभूपत्न्योः क्रोष्ट्री क्षीरविदारिका ॥ ४०९ ॥
शृगालिका लाङ्गली च क्षौद्रं तु मधुनीरयोः ।
खरो रक्षोऽन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च ॥ ४१० ॥
खरुः स्यादश्वहरयोर्दर्पदन्तासितेषु च ।
खुरः शफे कोलदले गरस्तूपविषे विषे ॥ ४११ ॥
रोगे गरं स्यात्करणे गात्रमङ्गशरीरयोः ।
गजाग्रदेशेऽथ गिरिःपूज्येऽक्षिरुजि कन्दुके ॥ ४१२ ॥
शैले गै[2]रेयके गीर्णावपि, गुन्द्रस्तु तेजने ।
गुन्द्रा प्रियङ्गौ कैवर्तीमुस्तके भद्रमुस्तके ॥ ४१३ ॥
गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके ।
अलघौ दुर्जरे चापि गृध्रो गृध्नौ खगान्तरे ॥ ४१४ ॥
गोत्रं क्षेत्रेऽन्वये छत्रे सभा[3]व्ये बोधवर्त्मनोः ।
वने नाम्नि च, गोत्रोऽद्रौ, गोत्रा भुवि गवां गणे ॥ ४१५ ॥
गौरः श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि ।
विशदे, गौरं तु श्वेतसर्षपे पद्मकेसरे ॥ ४१६ ॥
गौर्युमानग्निकोवींषु प्रियङ्गौ वरुणास्त्रियाम् ।
रजन्यां रोचनीनद्योर्घस्रो वासरहिंस्रयोः ॥ ४१७ ॥
घोरो हरे दारुणे च चरः स्याज्जङ्गमे स्पशे ।

---

१. उत्तरे भूपभेदे । २. गिरियके । ३. संभाव्यबोध ।

चले[1] द्यूतप्रभेदे च चक्रे प्रहरणे गणे ॥ ४१८ ॥
कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः ।
जलावर्ते छले[2], चक्रः कोके, चन्द्रोऽम्बुकाम्ययोः ॥ ४१९ ॥
स्वर्णे सुधांशौ कर्पूरे काम्पिल्ये मेचकेऽपि च ।
चरुर्हव्यान्ने भाण्डे च चारो वन्धावसर्पयोः ॥ ४२० ॥
गतौ पियालवृक्षे च चित्रं खे तिलकेऽद्भुते ।
आलेख्ये कर्बुरे, चित्रा त्वाखुपर्णीसुभद्रयोः ॥ ४२१ ॥
गोडुम्ब्यप्सरसोर्दन्त्यां[3] नक्षत्रोरगभेदयोः ।
चीरं वाससि चूडायां गोस्तने सीसपत्रके ॥ ४२२ ॥
चीरी कच्छाटिकाझिल्लयोश्चक्रस्त्वम्लेऽम्लवेतसे ।
वृक्षाम्ले, चुक्री चाङ्गेर्यां चैत्रो मासाद्रिभेदयोः ॥ ४२३ ॥
चैत्रं मृतकचैत्ये च चौरो दस्युसुगन्धयोः ।
छत्रं स्यादातपत्राणे छत्रा मधुरिकौषधौ ॥ ४२४ ॥
धान्याके च शिलिन्ध्रे[4] च छिद्रं विवररन्ध्रवत् ।
गर्ते दोषे, जारस्तूपपतौ जार्योषधीभिदि ॥ ४२५ ॥
जीरस्त्वजाज्यां खड्गे च टारो लङ्गतुरङ्गयोः ।
तन्त्रं राष्ट्रे च सिद्धान्ते परच्छन्दप्रधानयोः ॥ ४२६ ॥
अगदे कुटुम्बकृत्ये तन्तुवाये परिच्छदे ।
श्रुतिशाखान्तरे शास्त्रे करणे ह्यर्थसाधके ॥ ४२७ ॥
इतिकर्तव्यतातन्त्वोस्तन्त्री स्याद्वल्लकीगुणे ।
अमृतायां च नद्यां च सिरायां वपुषोऽपि च ॥ ४२८ ॥
तरिर्दशायां नौकायां वस्त्रादीनां च पेटके ।
तन्द्री निन्द्रा प्रमीला च तारो निर्मलमौक्तिके ॥ ४२९ ॥
मुक्ताशुद्धावुच्चनादे नक्षत्रनेत्रमध्ययोः ।
तारं रूप्ये, तारा बुद्धदेव्यां सुरगुरुस्त्रियाम् ॥ ४३० ॥
सुग्रीवपत्न्यां, ताम्रं तु शुल्बे शुल्बनिभेऽपि च ।

---

१. वले । २. दम्भे ।
३. गोडुम्बाप्सहयोः । ४. शिलीन्ध्रे । ५. वेडा ।

तीव्रं कटूष्णात्यर्थेषु तीव्रा तु कटुरोहिणी ॥ ४३१ ॥
गण्डदूर्वा सुरी, तीरो वङ्गे, तीरं पुनस्तटे ।
तोत्रं वेणुके प्रतोदे दरः स्याद्भयगर्त्तयोः ॥ ४३२ ॥
दरी तु कन्दरे, दस्रः खरे, दस्रौ रवेः सुतौ ।
द्वारं निर्गमेऽभ्युपाये धरः कूर्माधिपे गिरौ ॥ ४३३ ॥
कार्पासे तूलेऽथ धरा मेदोभूमिजरायुषु ।
धारो जलधरासारवर्षणे स्यादृणेऽपि च ॥ ४३४ ॥
धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ ।
जलादिपाते सन्तत्यां धात्री भुव्युपमातरि ॥ ४३५ ॥
आमलक्यां जनन्यां च धीरो ज्ञे धैर्यसंयुते ।
स्वैरे, धीरं तु घुसृणे नरो मर्त्येऽच्युतेऽर्जुने ॥ ४३६ ॥
नरं तु रामकर्पूरे नक्रं नासाग्रदारुणोः ।
नक्रो यादसि, नीध्रं[1] तु वलीकवननेमिषु ॥ ४३७ ॥
चन्द्रे च रेवतीभे च नेत्रं वस्त्रे मथोगुणे ।
मूलाक्षिनेतृषु, परो दूरान्यश्रेष्ठशत्रुषु ॥ ४३८ ॥
परं तु केवले, पत्रं यानं पक्षश्छदश्छुरी ।
पारं प्रान्ते परतटे पारी पूरपरागयोः ॥ ४३९ ॥
पात्र्यां कर्करिकायां च पादबन्धे च हस्तिनाम् ।
पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि ॥ ४४० ॥
योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्त्तरि ।
पुरं शरीरे नगरे गृहपाटलिपुत्रयोः ॥ ४४१ ॥
पुरस्तु गुग्गुलौ, पुण्ड्रं कृमौ दैत्येक्षुभेदयोः ।
वासन्त्यां तिलके पुण्डरीके, पुण्ड्रास्तु नीवृति ॥ ४४२ ॥
पुरुः पुरोगे प्रचुरे स्वर्लोकनृपभेदयोः ।
पूरः स्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः ॥ ४४३ ॥
पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च ।
पौरं कत्तृणे पुरजे बभ्रुःपिङ्गाग्निशूलिषु ॥ ४४४ ॥

---

1. नीवं ।

मुनौ विशाले नकुले त्रिष्णौ, भद्रं तु मङ्गले ।
मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे ॥ ४४५ ॥
भद्रो रामचरे हस्तिजातौ मेरुकदम्बके ।
गवि शम्भौ, भद्रा विष्टौ नभःसरिति कट्फले ॥ ४४६ ॥
कृष्णानन्तारास्नासु च भरोऽतिशयभारयोः ।
भरुर्भर्तृकनकयोर्भारो दशशतीद्वये ॥ ४४७ ॥
पलानां वीवधे चापि भीरुर्योषिति कातरे ।
भूरिः स्यात्प्रचुरे स्वर्णे मन्त्रो देवादिसाधने ॥ ४४८ ॥
वेदांशे गुप्तवादे च मरुः पर्वतदेशयोः ।
मारोऽनङ्गे मृतौ विघ्नं मारी चण्ड्यां जनक्षये ॥ ४४९ ॥
मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये, मात्रा परिच्छदे ।
अक्षरावयवे द्रव्ये माल्येऽल्पे कर्णभूषणे ॥ ४५० ॥
काले वृत्ते च मित्रं तु सख्यौ, मित्रो दिवाकरे ।
यन्त्रं देवाद्यधिष्ठाने पात्रभेदे नियन्त्रणे ॥ ४५१ ॥
यात्रोत्सवे गतौ वृत्तौ, राष्ट्रमुत्पातनीवृतोः ।
रुरुर्दैत्ये मृगे,रेत्रं पीयूषपटवासयोः ॥ ४५२ ॥
रेतःसूतकयो, रोध्रो लोध्रे रोध्रद्रुमागसोः ।
रौद्रो भीष्मे रसे तीव्रे, रौद्री गौर्यां, वरो वृत्तौ ॥ ४५३ ॥
विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते ।
वरं तु घुसृणे किञ्चिदिष्टे, वरी शतावरी ॥ ४५४ ॥
वक्रं पुटभेदे, वक्रः कुटिले क्रूरभौमयोः ।
वक्त्रमास्ये छन्दसि च वप्रः प्राकाररोधसोः ॥ ४५५ ॥
क्षेत्रे ताते चये रेणौ वज्रं कुलिशहीरयोः ।
बालके वज्रा त्वमृता, वध्रः सीसवरत्रयोः ॥ ४५६ ॥
व्यग्रो व्यापृताकुलयोर्वारःसूर्यादिवासरे ।
महे स्वरावसरयोर्वृन्दे कुब्जाख्यपादपे ॥ ४५७ ॥
वारं तु मदिरापात्रे वारि ह्रीवेरनीरयोः ।

वारिर्घट्यां सरस्वत्यां वारी घटीभबन्धिनी ॥ ४५८ ॥
व्याघ्रः करञ्जे शार्दूले रक्तैरण्डतरावपि ।
श्रेष्ठे तूत्तरपदस्थः स्यात् व्याघ्री कण्टकारिका ॥ ४५९ ॥
वीरो जिने भटे श्रेष्ठे वीरं शृङ्ग्यां नतेऽपि च ।
वीरा गम्भारिकारम्भातामलक्येलवालुषु ॥ ४६० ॥
मदिराक्षीरकाकोलीगोष्ठोदुम्बरिकासु च ।
पतिपुत्रवतीक्षीरविदारीदुग्धिकास्वपि ॥ ४६१ ॥
वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ ।
वेरं घुसृणवृन्ताकशरीरेषु, शरं जले ॥ ४६२ ॥
शरः पुनर्दधिसारे काण्डतेजनयोरपि ।
शक्रोऽर्जुनतराविन्द्रे कुटजे शस्त्रमायुधे ॥ ४६३ ॥
लोहे, शस्त्री छुरिकायां, शद्रिर्जिष्णौ तडित्यपि ।
शरुः कोपे शरे वज्रे शारः शबलवातयोः ॥ ४६४ ॥
द्यूतस्य चोपकरणे शास्त्रं ग्रन्थनिदेशयोः ।
शारिः कुञ्जरपर्याणे शकुनौ द्यूतसाधने ॥ ४६५ ॥
शिग्रुः शोभाञ्जने शाके शीघ्रं चक्राङ्गतूर्णयोः ।
उशीरे, शुक्रस्तु शुक्रे ज्येष्ठमासेऽग्निकाव्ययोः ॥ ४६६ ॥
शुक्रं तु रेतोऽक्षिरुजोः शुभ्रं दीप्तेऽभ्रके सिते ।
शूरश्चारे भटे सूर्ये सरौ दध्यग्रसायकौ ॥ ४६७ ॥
स्वरः शब्देऽपि षड्जादौ सत्रमाच्छादने क्रतौ ।
सदा दाने वने वापि स्वरुः स्याद्यूपखण्डके ॥ ४६८ ॥
अध्वरे कुलिशे बाणे सारो मज्जास्थिरांशयोः ।
बले श्रेष्ठे च सारं तु द्रविणन्ययवारिषु ॥ ४६९ ॥
स्फारस्तु करकादीनां बुद्बुदे विपुवेऽपि च ।
स्थिरो मोक्षे निश्चले च स्थिरा भूः शालपर्ण्यपि ॥ ४७० ॥
सिप्रः स्वेदे, सिप्रा नद्यां, सिरा नाड्यम्बुवाहिनी ।
सिरस्तु पिप्पलीमूलं सीरः स्यादंशुमालिनि ॥ ४७१ ॥

---

१. गजबन्धनभुव्यपि । २. दम्भे इति पाठः ।

लाङ्गलेऽथ सुरो देवे, सुरा चषकमद्ययोः।
सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयोः॥ ४७२॥
स्वैरो मन्दे स्वतन्त्रे च हरो नाशकरुद्रयोः।
वैश्वानरेऽप्यथ हरिर्दिवाकरसमीरयोः॥ ४७३॥
यमवासवसिंहांशुशशाङ्ककपित्वाजिषु।
पिङ्गवर्णे हरिद्वर्णे भेकोपेन्द्रशुकाहिषु॥ ४७४॥
लोकान्तरे च हारस्तु मुक्तादामनि संयुगे।
हिंस्रः स्याद्घातुके, हिंस्रा मांसी काकादनी वसा॥ ४७५॥
हीरो वज्रे हरे सर्पे हीरा पिपीलिकाश्रियोः।
होरा तु लग्ने राश्यर्धे शास्त्ररेखाप्रभेदयोः॥ ४७६॥

इति द्विस्वररान्ताः।

अलिः सुरापुष्पलिहोरम्लो रसेऽम्लवेतसे।
अम्ली चाङ्गेर्यामालं स्यादनल्पहरितालयोः॥ ४७७॥
आलिः सख्यावलीसेतुष्वनर्थे विशदाशये।
आलुर्गलन्तिकायां स्यादालु भेलककन्दयोः॥ ४७८॥
इलोर्वी वाग् बुधस्त्री गौः, कलं त्वजीर्णरेतसोः।
अव्यक्तमधुरध्वाने कला स्यदंशशिल्पयोः॥ ४७९॥
कलने मूलरैवृद्धौ षोडशांशे विधोरपि।
कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि॥ ४८०॥
कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः।
मरणाऽनेहसोः, काली कालिकाक्षीरकीटयोः॥ ४८१॥
मातृभेदोमयोर्नव्यमेघौघपरिवादयोः।
काला कृष्णत्रिवृन्निन्योर्जुङ्ग्यां, कीलोऽग्नितेजसि॥ ४८२॥
कफणिस्तम्भयोः शङ्कौ, कीला रतहतावपि।
कुलं कुल्यगणे गेहे देहे जनपदेऽन्वये॥ ४८३॥
कूलं तटे सैन्यपृष्ठे तडागस्तूपयोरपि।

---

१. रासभ। २. स्त्रियोः। ३. अनर्थ।
४. सेत्वनर्थेषु। ५. काल। ६. जिङ्गी।

कोलो भेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ ॥ ४८४ ॥
कोलं तु बदरे, कोला पिप्पल्यां च विभेषजे ।
खलं कल्के भुवि स्थाने क्रूरे कर्णे जपेऽधमे ॥ ४८५ ॥
खल्लो निम्ने वस्त्रभेदे चर्मचातकपक्षिणोः ।
खल्ली तु हस्तपादावमर्दनाह्वयरुज्यपि ॥ ४८६ ॥
गलः कण्ठे सर्जरसे गोलः स्यात्सर्ववर्तुले ।
गोला पत्राञ्जने गोदावर्यां सख्यामलिञ्जरे ॥ ४८७ ॥
मण्डले च कुनट्यां च बालक्रीडनकाष्ठके ।
चिल्लः खगे, सचुल्लश्च पिल्लवत् क्लिन्नलोचने ॥ ४८८ ॥
क्लिन्नेऽक्षिण, चुल्ली तूद्धाने चेलं गर्हितवस्त्रयोः ।
चोलः कूर्पासके देशे चौलकर्मणि मुण्डने ॥ ४८९ ॥
छलं छद्मस्खलितयोश्छल्ली सन्तानवीरुधोः ।
वल्कले पुष्पभेदे च जलं गोकलने जडे ॥ ४९० ॥
ह्रीवेरेऽम्बुनि, जालं तु गवाक्षे क्षारके गणे ।
दम्भानाययोश्च, जालो नीपे, जाली पटोलिका ॥ ४९१ ॥
झला पुत्र्यामातपोर्म्मौ झिल्ली तूद्वर्त्तनांशके ।
वर्त्यातपरुचोश्चीर्यां तलं ज्याघातवारणे ॥ ४९२ ॥
तलश्चपेटे तालद्रौ स्वभावाधरयोः त्सरौ ।
तल्लो जलाधारभेदे तल्ली तु तरुणस्त्रियाम्[१] ॥ ४९३ ॥
तालः कालक्रियामाने हस्तमानद्रुभेदयोः ।
करास्फोटे करतले हरिताले त्सरावपि ॥ ४९४ ॥
तुला माने पलशते सादृश्ये राशिभाण्डयोः ।
गृहाणां दारुबन्धाय पीठ्यां, तूलं तु खे पिचौ ॥ ४९५ ॥
ब्रह्मदारुण्यथ दलं शस्त्रीछदेऽर्धपर्णयोः ।
उत्सेधवद्वस्तुनि च नलो राज्ञि कपौ नडे ॥ ४९६ ॥
पितृदैवेऽथ नलं स्यात्पद्मे, नली मनःशिला ।
नालं काण्डे मृणाले च नाली शाककदम्बयोः[२] ॥ ४९७ ॥

---

१. वरुणस्त्रियाम् । २. कलम्बके ।

नीलो वर्णे मणौ शैले निधिवानरभेदयोः ।
नील्योषध्यां लाञ्छने च पलमुन्मानमांसयोः ॥ ४९८ ॥
पल्लिश्च ग्रामके कुड्यां[1] पालिर्यूकाश्रिपङ्क्तिषु ।
जातश्मश्रुस्त्रियां प्रान्ते सेतौ कल्पितभोजने ॥ ४९९ ॥
प्रशंसाकर्णलतयोरुत्सङ्गे प्रस्थचिह्नयोः ।
पीलुः पुष्पे द्रुमे काण्डे परमाणौ मतङ्गजे ॥ ५०० ॥
तालास्थिखण्डे च, पुलः पुलके विपुलेऽपि च ।
फलं हेतुकृते जातीफले फलकसस्ययोः ॥ ५०१ ॥
त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः ।
फली फलिन्यां, फलि तु वसने, फाल उत्प्लुतौ ॥ ५०२ ॥
कुशके[2] च, बलं रूपे स्थामनि स्थौल्यसैन्ययोः ।
बोले, बलस्तु बलिनि काके दैत्ये हलायुधे ॥ ५०३ ॥
बला त्वोषधिभेदे स्यात्, बलिर्दैत्योपहारयोः ।
करे चामरदण्डे च गृहदारूदरांशयोः ॥ ५०४ ॥
त्वक्सङ्कोचे गन्धके च बालोऽज्ञेऽश्वेभपुच्छयोः ।
शिशौ ह्रीवेरकचयोर्बाला तु त्रुटियोषितोः ॥ ५०५ ॥
बाली भूषान्तरे मेधौ बिल उच्चैःश्रवोहये ।
बिलं रन्ध्रे गुहायां च भल्लं भल्लूकबाणयोः ॥ ५०६ ॥
भल्ली भल्लातके, भालं स्याल्ललाटे महस्यपि ।
भेलः प्लवे मुनिभेदे भीरौ बुद्धिविवर्जिते ॥ ५०७ ॥
मल्लः कपाले बलिनि मत्स्ये पात्रे, मलस्त्वघे ।
किट्टे कदर्ये विष्ठायां मालं तु कपटे वने ॥ ५०८ ॥
मालो जने स्यान्माला तु पङ्क्तौ पुष्पादिदामनि ।
मालुः स्त्रियां पत्रवल्ल्यां मूलं पार्श्वाद्ययोरुडौ ॥ ५०९ ॥
निकुञ्जशिफयोः स्वीये शिलायां च वशीकृतौ ।
प्रतिष्ठायामथो मेला त्वञ्जने मेलकेऽपि च ॥ ५१० ॥
मौलिः किरीटे धम्मिले चूडाकङ्कोलिमूर्द्धसु ।

---

1. कुट्यां । 2. कुशिके ।

लीला केलिर्विलासश्च शृङ्गारभावजक्रिया ॥ ५११ ॥
लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः ।
वल्ली स्यादजमोदायां लतायां कुसुमान्तरे ॥ ५१२ ॥
व्यालो दुष्टगजे सर्पे शठे श्वापदहिंस्रयोः ।
वेला बुधस्त्रियां काले सीमनीश्वरभोजने ॥ ५१३ ॥
अक्लिष्टमरणेऽम्भोधेस्तीरनीरविकारयोः ।
शालो हाले मत्स्यभेदे, शालौकस्तत्प्रदेशयोः ॥ ५१४ ॥
स्कन्धशाखायां, शालिस्तु गन्धोलौ कलमादिषु ।
शालुः कषायद्रव्ये स्याच्चोरकाख्यौषधेऽपि च ॥ ५१५ ॥
शिलमुञ्छं, शिला द्वाराऽधोदारु कुनटी दृषत् ।
शिली गण्डूपदी, शीलं साधुवृत्तस्वभावयोः ॥ ५१६ ॥
शुक्लं रूप्ये, शुक्लो योगे श्वेते, शूलं रुगस्त्रयोः ।
योगे, शूला तु पण्यस्त्री वधहेतुश्च कीलकः ॥ ५१७ ॥
शैलो भूभृति शैलं तु शैलेये तार्क्ष्यशैलके ।
सालः सर्जतरौ वृक्षमात्रप्राकारयोरपि ॥ ५१८ ॥
स्थालं भाजनभेदे स्यात् स्थाली तु पाटलोखयोः ।
स्थूलः पीने जडे, हालः शालिवाहनपार्थिवे ॥ ५१९ ॥
हाला सुरायां, हेला तु स्यादवज्ञाविलासयोः ।
होलिरालिङ्गने सूर्येऽपि-

इति द्विस्वरलान्ताः ।

अविर्मूषिककम्बले ॥ ५२० ॥
मेषे रवौ पर्वते च स्यादूर्ध्वं तु समुच्छ्रिते ।
उपर्य्युन्नतयोः, कण्वो मुनौ, कण्वं तु कल्मषे ॥ ५२१ ॥
क्षवः क्षुते राजिकायां कविः काव्यस्य कर्तरि ।
विचक्षणे दैत्यगुरौ स्यात् कवी तु खलीनके ॥ ५२२ ॥
किण्वं पापे सुराबीजे क्लीबोऽपौरुषषण्डयोः ।
खर्वह्रस्वौ न्यग्वामनौ ग्रीवे शिरोधितच्छिरे ॥ ५२३ ॥

---

१. सिंह । २. गन्धोली । ३. सातवाहन ।

छविस्तु रुचि शोभायां जवः स्याद्वेगवेगिनोः ।
जवोण्ड्रपुष्पे, जिह्वा तु वाचि ज्वालारसज्ञयोः ॥ ५२४ ॥
जीवः स्यात्त्रिदशाचार्ये द्रुमभेदे शरीरिणी ।
जीवितेऽपि च, जीवा तु वचायां धनुषो गुणे ॥ ५२५ ॥
शिञ्जिते क्षितिजीवन्त्योर्वृत्तौ, तत्वं परमात्मनि ।
वाद्यभेदे स्वरूपे च द्रवो विद्रवनर्मणोः ॥ ५२६ ॥
प्रद्रावे रसगत्योश्च द्वन्द्वः से, द्वन्द्वमाहवे ।
रहस्ये मिथुने युग्मे दवदावौ वनानले ॥ ५२७ ॥
वने, दर्वी फणान्तर्द्वौ दार्व्वी स्याद्देवदारुणि ।
हरिद्राद्वितये चापि दिवं खे त्रिदिवे दिने ॥ ५२८ ॥
देवं हृषीके, देवस्तु नृपतौ तोदये सुरे ।
देवी कृताभिषेकायां तेजनीपृक्कयोरपि ॥ ५२९ ॥
धवो धूर्त्ते नरे पत्यौ द्रुभेदेऽथ ध्रुवो वटे ।
वसुयोगभिदोः शम्भौ शङ्कावुत्तानपादजे ॥ ५३० ॥
स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः ।
ध्रुवा मूर्वाशालिपर्ण्योः स्रग्भेदे गीतभिद्यपि ॥ ५३१ ॥
नवो नव्ये स्तुतौ, नीवी स्त्रीकटीवस्त्रबन्धने ।
मूलद्रव्ये परिपणे, प्लवः प्लक्षे प्लुतौ कपौ ॥ ५३२ ॥
शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः ।
क्रमनिम्नमहीभागे कुलके जलवायसे ॥ ५३३ ॥
जलान्तरे, प्लवं गन्धतृणे मुस्तकभिद्यपि ।
पक्कं परिणते नाशाभिमुखे, पार्श्वमन्तिके ॥ ५३४ ॥
कक्षाधोऽवयवे चक्रोपान्तपर्शुसमूहयोः ।
प्राध्वं दूरपथे प्रह्वे बन्धे, पूर्वं तु पूर्वजे ॥ ५३५ ॥
प्रागग्रे श्रुतिभेदे च भवः सत्ताप्तिजन्मसु ।
रुद्रे श्रेयसि संसारे, भावोऽभिप्रायवस्तुनोः ॥ ५३६ ॥
स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु ।
चेष्टायोन्योर्बुधे जन्तौ शृङ्गारादेश्च कारणे ॥ ५३७ ॥

शब्दप्रवृत्तिहेतौ च यवो धान्ये पृथक्कृतौ ।
यावोऽलक्ते पाकभिदि रेवा मन्मथयोषिति ॥ ५३८ ॥
नील्यां मेखलकन्यायां लवः कालभिदि छिदि ।
विलासे रामजे लेशे जंपाकिञ्जल्कपक्ष्मणोः ॥ ५३९ ॥
गोपुच्छलोमस्वपि च लट्वा पक्षिकुसुम्भयोः ।
लघ्वी ह्रस्वविवक्षायां प्रभेदे स्पन्दनस्य च ॥ ५४० ॥
विश्वाः सुरेषु, विश्वं तु शुण्ठ्यां भुवनकृत्स्नयोः ।
विश्वा विषायां, शिवं तु मोक्षे क्षेमे सुखे जले ॥ ५४१ ॥
शिवो योगान्तरे वेदे गुग्गुलौ वालुके हरे ।
पुण्डरीकद्रुमे कीले, शिवा झाटामलोमयोः ॥ ५४२ ॥
फेरौ शम्यां पथ्याध्यात्र्योः, शिविर्भूर्जे नृपान्तरे ।
शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ ॥ ५४३ ॥
सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः ।
पिशाचादावात्मभावे बले प्राणेषु जन्तुषु ॥ ५४४ ॥
सान्त्वं सामनि दाक्षिण्ये, स्रुवा मूर्वा स्रुवा स्रुचि ।
हवस्तु सप्ततन्तौ स्यान्निदेशाह्वानयोरपि ॥ ५४५ ॥

इति द्विस्वरवान्ताः ।

अंशो विभाजने प्रोक्त एकदेशेऽपि वस्तुनः ।
अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ ॥ ५४६ ॥
आशा ककुभि तृष्णायामाशु तु व्रीहिशीघ्रयोः ।
ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके ॥ ५४७ ॥
कशा स्यादश्वताडन्यां रज्जौ मुखगणेऽपि च ।
काशस्तृणे रोगभेदे कीशो दिगम्बरे कपौ ॥ ५४८ ॥
कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः ।
कुशी लोहविकारे स्यात्, कुशा वल्गा, कुशं जले ॥ ५४९ ॥
केशः शिरसिजे पाशपाणौ ह्रीवेरदैत्ययोः ।
क्लेशो दुःखे च रागादौ कोशः कोष इवाण्डके ॥ ५५० ॥

१. तथा ।

कुड्मले चषके दिव्येऽर्थचये योनिशिम्बयोः ।
जातीकोशेऽसिपिधाने दर्शः सूर्येन्दुसङ्गमे ॥ ५५१ ॥
पक्षान्तेऽष्टौ दर्शने च दंशो वर्मणि मर्मणि ।
दोषे वनमक्षिकायां खण्डने भुजगक्षते ॥ ५५२ ॥
दशा वर्त्तावस्थायां दशास्तु वसनाञ्चले ।
नाशः पलायने मृत्यौ परिध्वस्तावदर्शने ॥ ५५३ ॥
निशा रात्रौ हरिद्रायां पशुश्छागे मृगादिषु ।
प्रथमेऽपि च पाशस्तु मृगपक्षादिबन्धने ॥ ५५४ ॥
कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः ।
छात्राद्यन्ते च निन्दार्थः पेशी मांस्यसिकोशयोः ॥ ५५५ ॥
मण्डभेदे पलपिण्डे सुपक्ककणिकेऽपि च ।
भूस्पृग्वैश्ये मानवे च राशिर्मेषादिपुञ्जयोः ॥ ५५६ ॥
यशो जनस्पृहोयत्तेष्वायत्तत्वप्रभुत्वयोः ।
वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि ॥ ५५७ ॥
वंशः सङ्घेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च ।
वेशो वेश्यागृहे गेहे नेपथ्ये च, शशः पशौ ॥ ५५८ ॥
वोलो लोध्रे नृभेदे च स्पशो हेरिकयुद्धयोः ।
स्पर्शो वर्गाक्षरे[1] दाने स्पर्शने स्पर्शके रुजि ॥ ५५९ ॥

इति द्विस्वरशान्ताः ।

अक्षो रथस्यावयवे व्यवहारे विभीतके ।
प्रासके[2] शकटे कर्षे ज्ञाने चाऽऽत्मनि रावणौ ॥ ५६० ॥
अक्षं सौवर्चले तुत्थे हृषीके, स्यादुषा निशि ।
बाणपुत्र्यां च, ऋक्षस्तु स्यान्नक्षत्राच्छभल्लयोः ॥ ५६१ ॥
महीधरविशेषे च शोणके क्षतवेधने ।
ऋषिर्वेदे मुनौ,कर्षः कर्षणे मानभिद्यपि ॥ ५६२ ॥
कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे ।
पापे, कक्षा त्विभरज्जौ काञ्च्यां गेहप्रकोष्ठके ॥ ५६३ ॥

१. वर्गान्तरे । २. पासके ।

भित्तौ साम्ये रथभागेऽन्तरीयपश्चिमाञ्चले ।
उद्ग्राहिण्यां च, कर्षूस्तु तुषाग्नौ कृषिकुल्ययोः ॥ ५६४ ॥
घोषः कांस्ये स्वने गोपघोषकाभीरपल्लिषु ।
घोषा तु शतपुष्पायां चोक्षः सुन्दरगीतयोः ॥ ५६५ ॥
शुचौ, झषस्तु मकरे वने मीने, झषा पुनः ।
नागबलायां तुषस्तु धान्यत्वचि विभीतके ॥ ५६६ ॥
दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ ।
द्रुमे, दक्षा तु मेदिन्यां ध्वांक्षः काके बकेऽर्थिनि ॥ ५६७ ॥
गृहे, ध्वांक्षी तु काकोल्यां, न्यक्षः कार्त्स्न्यनिकृष्टयोः ।
जामदग्न्येऽपि, पक्षस्तु मासार्धे ग्रहसाध्ययोः ॥ ५६८ ॥
चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये ।
पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे ॥ ५६९ ॥
प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके ।
प्रेक्षा धीरीक्षणं नृत्तं, प्रैषः प्रेषणपीडने ॥ ५७० ॥
पौषो मासप्रभेदे स्यात्पौषं तु महयुद्धयोः ।
भिक्षा सेवाप्रार्थनयोर्भृतौ भिक्षितवस्तुनि ॥ ५७१ ॥
माषो माने धान्यभेदे मूर्खे त्वग्दोषभिद्यपि ।
मिषं व्याजे स्पर्शभेदे[1] मेषो राश्यन्तरे हुडौ ॥ ५७२ ॥
मोक्षो निःश्रेयसे वृक्षविशेषे मोचने मृतौ ।
यक्षः श्रीदे च[2] गुह्ये च रक्षा रक्षणभस्मनोः ॥ ५७३ ॥
रूक्षोऽस्निग्धपरुषयोर्लक्षं व्याजशरव्ययोः ।
संख्यायामपि, वर्षस्तु समाद्वीपाब्दवृष्टिषु ॥ ५७४ ॥
वर्षधरेऽपि, वर्षास्तु प्रावृष्यथ विषं जले ।
क्ष्वेडे, विषा त्वतिविषा, वृषो गव्यासुधर्मयोः ॥ ५७५ ॥
पुंराशिभेदयोः शृङ्ग्यां वासके शुक्रलेऽपि च ।
श्रेष्ठे स्यादुत्तरस्थश्च वृषी तु ऋषिविष्टरे ॥ ५७६ ॥

---

१. स्पर्शने च । २. श्रीदे च गुह्यके ।

वृषा वृत्राकपिकच्छवोः शुषिः शुषिरशोषयोः ।
शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपि च ॥ ५७७ ॥
शेषा निर्माल्यदाने स्याच्छोषः शोषणयक्ष्मणोः ।

इति द्विस्वरषान्ताः ।

अंसं स्कन्धे विभागे स्यादसिः खड्ग नदीभिदि ॥ ५७८ ॥
अर्चिर्मयूखशिखयोरदात्रे च परत्र च ।
आगः स्यादेनोवदघे मन्ता, वाशीर्हितैषिणि ॥ ५७९ ॥
उरगस्य च दंष्ट्रायामुषः सन्ध्याप्रभातयोः ।
उरो वक्षसि मुख्ये स्यादोजो दीप्तिप्रकाशयोः ॥ ५८० ॥
अवष्टम्भे बले धातुतेजस्योकस्तु सद्मनि ।
ओकास्त्वाश्रयमात्रे स्यात् कंसस्तैजसमानयोः ॥ ५८१ ॥
पानपात्रे दैत्यभेदे कारूः शक्त्यायुधे रुजि ।
बुद्धौ विकलवाचि स्याद् गुत्सः स्तम्बगुलच्छयोः ॥ ५८२ ॥
हारभेदे ग्रन्थिपर्णे, गोसो वोलविभातयोः ।
चास इक्षुपक्षिभिदोश्छन्दः पद्येच्छयोः श्रुतौ ॥ ५८३ ॥
ज्यायान् वृद्धे प्रशस्ये च ज्योतिर्वह्निदिनेशयोः ।
प्रकाशे दृशि नक्षत्रे तपः कृच्छ्रादिकर्मणि ॥ ५८४ ॥
धर्मे लोकप्रभेदे च तपाः शिशिरमाघयोः ।
तमो राहौ गुणे पापे ध्वान्ते, तरो जवे बले ॥ ५८५ ॥
त्रासो भये मणिदोषे तेजस्त्वट्रेतसोर्बले ।
नवनीते प्रभावेऽग्नौ दासो धीवरभृत्ययोः ॥ ५८६ ॥
वृषले दानपात्रे च दासी भिद्यपि चेद्यपि ।
धनुः शरासने राशौ प्रियालद्रौ धनुर्धरे ॥ ५८७ ॥
नभो व्योम्नि, नभा घ्राणे बिसतन्तौ पतद्ग्रहे ।
प्रावृषि श्रावणे, नासा घोणा द्वारोऽध्वदारुणोः ॥ ५८८ ॥
पयः क्षीरे च नीरे च प्रसूरश्वा जनन्यपि ।
बर्हिः कुशेऽग्नौ, भासस्तु भासि गृध्रशकुन्तयोः ॥ ५८९ ॥
महस्तेजस्युत्सवे च मिसिर्मांस्यजमोदयोः ।

शतपुष्पामधुर्योश्च मृत्सा काक्षी सुमृत्तिका ॥ ५९० ॥
रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे ।
चोले रोगे देहधातौ तिक्तादौ पारदेऽपि च ॥ ५९१ ॥
रसा तु रसना पाठासल्लकीक्षितिकङ्गुषु ।
रहो गुह्ये रते तत्त्वे, रजो रेणुपरागयोः ॥ ५९२ ॥
स्त्रीपुष्पे गुणभेदे च रासक्रीडासु गोदुहाम् ।
भाषाशृङ्खलके, वत्सा पुत्रादिवर्षतर्णकाः ॥ ५९३ ॥
वयस्तारुण्यबाल्यादौ खगे, वर्चस्तु तेजसि ।
गूथे रूपे, वसुस्त्वग्नौ देवभेदे नृपे रुचि ॥ ५९४ ॥
योक्त्रे शुल्के, वसु स्वर्णे रत्ने वृद्ध्यौषधौ धने ।
वपुः शस्ताकृतौ देहे व्यासो मुनिप्रपञ्चयोः ॥ ५९५ ॥
वासो वेश्मन्यवस्थाने वासा स्यादटरूषके ।
विद्वान् ज्ञात्मविदोः प्राज्ञे वेधा धातृज्ञविष्णुषु ॥ ५९६ ॥
शंसा वचसि वाञ्छायां शिरो मूर्धप्रधानयोः ।
सेनाग्रभागे, श्रेयस्तु मङ्गले धर्मशस्तयोः ॥ ५९७ ॥
सहो बले ज्योतिषि च सहो हेमन्तमासयोः ।
स्रोतः प्रवाहेन्द्रिययोर्हंसोऽर्के मत्सरेऽच्युते ॥ ५९८ ॥
खगाश्वयोगिमन्त्रादिभेदेषु परमात्मनि ।
निर्लोभनृपतौ प्राणवाते श्रेष्ठेऽग्रतः स्थितः ॥ ५९९ ॥
हविः सर्पिषि होतव्ये हिंसा चौर्यादिके वधे ।

इति द्विस्वरसान्ताः ।

अहिः सर्पे वृते वप्रे स्यादीहोद्यमवाञ्छयोः ॥ ६०० ॥
कुहूर्नष्टेन्दुदर्शे स्यात्क्वणिते कोकिलस्य च ।
ग्रहो ग्रहणनिर्बन्धानुग्रहेषु रणोद्यमे ॥ ६०१ ॥
उपरागे पूतनादावादित्यादौ विधुन्तुदे ।
ग्राहो गृहे जलचरे, गुहः स्कन्दे, गुहा पुनः ॥ ६०२ ॥

१. वासी । २. उरस्तुक् । ३. रुची ।
४. बुके । ५. स्वादौ । ६. मार्गयोः ।

गह्वरे सिंहपुच्छयां च गृहा दारेषु सद्मनि ।
ग्रौहो निपुणतर्के स्यादृजाङ्घ्रिपर्वणोरपि ॥ ६०३ ॥
बर्हं[1] पर्णे परीवारे कलापे, बहु भूयसि ।
त्र्यादिकासु च संख्यासु, महावुत्सवतेजसी ॥ ६०४ ॥
मही भुवि नदीभेदे मोहो मुर्च्छाविपर्ययोः ।
लोहं कालायसे सर्वतैजसे जोङ्गकेऽपि च ॥ ६०५ ॥
वहो वृषस्कन्धदेशे वायौ, वाहोऽश्वमानयोः ।
वृषे, वाहा तु वाहौ स्याद् व्यूहो निर्माणतर्कयोः ॥ ६०६ ॥
समूहे बलविन्यासे सहः क्षमे बलेऽपि च ।
सहोर्व्यां सहदेवायां कुमार्यां नखभेषजे ॥ ६०७ ॥
मुद्गपर्ण्यां च सिंहस्तु राशिभेदे मृगाधिपे ।
श्रेष्ठे स्यादुत्तरस्थश्च सिंही स्वर्भानुमातरि ॥ ६०८ ॥
वासाबृहत्योः क्षुद्रायां स्नेहः प्रेम्णि घृतादिके ।

इति द्विस्वरहान्ताः ।

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसंग्रहे द्विस्वरकाण्डो द्वितीयः ।

## अथ तृतीयः काण्ड

अणुको निपुणेऽल्पे चाऽशोकौ कङ्केल्लिवञ्जुलौ ।
निःशोकपारदौ चाप्यशोका तु कटुरोहिणी ॥ १ ॥
अभीको निर्भये कम्रेऽप्यनीकं रणसैन्ययोः ।
अलीकमप्रिये भावे वितथेऽनूकमन्वये ॥ २ ॥
शीले,ऽनूको गतजन्मन्यंशुकं सूक्ष्मवाससि ।
उत्तरीये वस्त्रमात्रेऽप्यलकाश्चूर्णकुन्तलाः ॥ ३ ॥
अलका तु कुबेरस्य नगर्यां,मन्तिकं पुनः ।
पार्श्वे,ऽन्तिका तु चुल्ली स्यात्सातलाख्यौषधेऽपि च ॥ ४ ॥
नाट्योक्तौ ज्येष्ठभगिनी अत्तिका प्रोच्यतेऽपि सा ।
अलर्को नृपे श्वेतार्के रोगोन्मादितशुन्यपि ॥ ५ ॥

१. बर्हः । २. सह । ३. श्लक्ष्ण ।
४. नृपविशेषे इति पाठः । ५. योग ।

अम्बिकोमापाण्डुमात्रोर्देवताभिदि मातरि ।
अन्धिका तु कैतवे स्याच्छर्वरीसिद्धयोरपि ॥ ६ ॥
अम्लिका तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु ।
आलोको दर्शने बन्दिभाषणोद्योतयोरपि ॥ ७ ॥
आनकः पटहे भेर्यां नदन्मेधमृदङ्गयोः ।
आतङ्को रुजि शङ्कायां सन्तापे मुरजध्वनौ ॥ ८ ॥
आह्निकं स्यात्पुनरहर्निर्वृत्ये नित्यकर्मणि ।
भोजने ग्रन्थभागे चाऽऽढकः प्रस्थचतुष्टयम् ॥ ९ ॥
आढकी तुवरीक्ष्वाकुः कटुतुम्ब्यां नृपान्तरे ।
स्यादुलूकः काकशत्राविन्द्रे भारतयोधिनि ॥ १० ॥
उष्णिका मृद्भाण्डभेदे करभस्य च योषिति ।
उदर्कस्तूत्तरकालफले मदनकण्टके ॥ ११ ॥
उष्णको धर्म उद्युक्तातुरयोरूर्मिका पुनः ।
उत्कण्ठयां भृङ्गनादे वस्त्रभङ्गेऽङ्गुलीयके ॥ १२ ॥
वीच्यां च कनकं हेम्नि कनको नागकेसरे ।
धत्तूरे चम्पके काञ्चनारकिंशुकयोरपि ॥ १३ ॥
करको दाडिमे पक्षिभेदे हस्ते कमण्डलौ ।
लट्वाकरञ्जयोर्मेघोपले च कटुकं कटु ॥ १४ ॥
कटुरोहिणी व्योषं च कञ्चुकश्चोलवर्मणोः ।
वर्द्धापकगृहीताङ्गवसने वारबाणके ॥ १५ ॥
निर्मोके, कटकस्त्वद्रिनितम्बे बाहुभूषणे ।
सेनायां राजधन्यां च क्रमुको भद्रमुस्तके ॥ १६ ॥
गुवाके पट्टिकालोध्रे कण्टकः क्षुद्रवैरिणि ।
वेणौ द्रुमाङ्गे रोमाञ्चे कलङ्कोऽङ्कापवादयोः ॥ १७ ॥
कालायसमले चापि कर्णिका कर्णभूषणे ।
बीजकोशे सरोजस्य करमध्याङ्गुलावपि ॥ १८ ॥

---

१. मिद्ध । २. ध्वनत् । ३. करे । ४. करञ्ज ।

कुट्टिन्यां हस्तिहस्ताग्रे कर्णिका सूक्ष्मवस्तुनि ।
अग्निमन्थे, कामुकास्तु काम्यशोकातिमुक्तकाः ॥ १९ ॥
कारकं कर्त्तृकर्माद्योः कारिका यातना नदी ।
कृतौ विवरणश्लोके नापितादिककर्मणि ॥ २० ॥
काबृकः कुक्कुटे कोके पीतमुण्डेऽथ कार्मुकः ।
वंशे, कार्मुकमिष्वासे कर्मठे, क्षारको रसे ॥ २१ ॥
कोरके पक्षादिपाशे कालिका योगिनीभिदि ।
स्वर्णादिदोषे मेघाल्यां सुरागौर्योर्नवाम्बुदे ॥ २२ ॥
क्रमेदयवस्तुमूल्ये कार्ष्ण्यवृश्चिकपत्रयोः ।
रोमाल्यां धूसरीमांस्योः काकीपटोलशाखयोः ॥ २३ ॥
किम्पाको वृक्षभिद्यज्ञे कीटको निष्ठुरे कृमौ ।
कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे ॥ २४ ॥
कुलकं पञ्चादि श्लोकसमन्वये पटोलके ।
कुलकः कुलप्रधाने वल्मीके काकतिन्दुके ॥ २५ ॥
कुलिकस्तु कुलश्रेष्ठे नागद्रुमविशेषयोः ।
कुशिको मुनिभेदे स्यात्फाले सर्जे विभीतके ॥ २६ ॥
क्षुल्लकः पामरे स्वल्पे कनिष्ठे दुःखिते[1] खले ।
कूपको गुणवृक्षे स्यात्तैलपात्रे ककुन्दरे ॥ २७ ॥
कूचिंका[2] क्षीरविकृतौ कुञ्चिकायां च कुड्मले ।
आलेख्यकूचिंकासूच्योः कृषकौ फालकर्षकौ ॥ २८ ॥
कोरकं कुड्मले तु स्यात्कक्कोलकमृणालयोः ।
कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि ॥ २९ ॥
पारम्पर्यागतस्थाने[3] मङ्गलोद्वाहसूत्रयोः ।
गीतादौ भोगकाले च कौशिकः शक्रघूकयोः ॥ ३० ॥
कोशज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ ।
कौशिकी चण्डिकानद्योः खनकः सन्धितस्करे ॥ ३१ ॥

---

१. दुःस्थिते । २. कुर्चिका । ३. ख्याते ।

मूषके भूमिवित्तज्ञे खट्टिको[1] मांसविक्रयी ।
महिषीक्षीरफेनश्च खुल्लकः स्वल्पनीचयोः ॥ ३२ ॥
खोलकः पूगकोशे स्याच्छिरस्त्रे नाकुपाकयोः ।
ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे ॥ ३३ ॥
ग्रन्थिको गुग्गुलौ देवज्ञे माद्रेयकरीरयोः ।
गण्डको विघ्ने विद्यायां संख्यावच्छेदखड्गिषु ॥ ३४ ॥
गण्डकी तु सरिद्भेदे गणको ग्रहवेदिनि ।
गणिकेभ्यां यूथिकायां तर्कार्यां पण्ययोषिति ॥ ३५ ॥
ग्राहको[2] ग्रहीतरि स्याद् व्याधानां घातिपक्षिणि ।
गान्धिको लेखके गन्धवणिजे, गुण्डकं पुनः ॥ ३६ ॥
कलोक्तौ मलिने धूलौ स्नेहपात्रेऽथ गैरिकम् ।
स्वर्णे धातौ, गोलकस्तु जारतो विधवासुते ॥ ३७ ॥
अलिञ्जरे गुडे चापि गोरङ्कुर्नग्नवेदिनोः[3] ।
खगे च, चषको मद्ये सरके मद्यभाजने ॥ ३८ ॥
चुलकः प्रसृतौ भाण्डप्रभेदे चुलुको यथा ।
चारकोऽश्वादिपाले स्याद्बन्धे संचारकेऽपि च ॥ ३९ ॥
चित्रकं चित्रकमये[4] द्रुमौषधिविशेषयोः ।
चुम्बकः कामुके धूर्ते बहुगुर्वश्मभेदयोः ॥ ४० ॥
चुल्लकी[5] कुण्डिकाभेदे शिशुमारे कुलान्तरे ।
चूतकः कूप आम्रे च चूलिका नाटकान्तरे ॥ ४१ ॥
करिणः कर्णमूले च जनकः पितृभूपयोः ।
जम्बुको वरुणे फेरौ जतुकं हिङ्गुलाक्षयोः ॥ ४२ ॥
जतुका च चर्मचटिका[6] जीवको वृद्धिजीविनि ।
क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे ॥ ४३ ॥
व्यालग्रहे, जीविका तु जीवन्त्यां वर्तनेऽपि च ।
झिल्लीका झिल्लिकेव स्याच्चीर्यां रुच्यातपस्य च ॥ ४४ ॥

१. खदिको । २. ग्रहिको । ३. लग्नवन्दिनोः ।
४. चित्रकाये । ५. चुलुकी । ६. चटका ।

विलेपनस्य च मले तक्षकस्तक्ष्णि पन्नगे ।
द्रुमभेदे, तण्डकस्तु समस्तपदजातके ॥ ४५ ॥
तरुस्कन्धे वेश्मदारुमायाबहुलयोरपि ।
फेनखञ्जनयोश्चापि तारकः कर्णधारके ॥ ४६ ॥
दैत्ये च, तारकमुडौ नेत्रतन्मध्ययोरपि ।
तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके ॥ ४७ ॥
तिलकं रुचके क्लोम्नि त्रिशङ्कुः शलभे नृपे ।
मार्जारे च तुरुष्कस्तु देशे श्रीवाससिह्लयोः ॥ ४८ ॥
तूलिका तूलशय्या स्यादालेख्यस्य च लेखनी ।
दर्शको दर्शयितरि प्रतीहारप्रवीणयोः ॥ ४९ ॥
द्रावकस्तु शिलाभेदे स्याद्घोषकविदग्धयोः ।
दारको भेदके पुत्रे दीपकः स्यादलङ्कृतिः ॥ ५० ॥
दीपकौ दीप्तिकृद्दीपौ दीप्यकं त्वजमोदके ।
मयूरशिखायवान्योर्धनिको धान्यके धवे ॥ ५१ ॥
धनाढ्ये, धनिका वध्वां धेनुका धेनुरित्यपि ।
धेनुकं धेनुसंहत्यां करणेऽपि च योषिताम् ॥ ५२ ॥
नरकौ दैत्यनिरयौ नन्दकः कुलपालके ।
हर्षके विष्णुखड्गे च नर्तकः केलके नटे ॥ ५३ ॥
द्विपे पोटगले चापि नर्तकी लासिका द्विपी ।
नालीकोऽङ्गे शरे शल्ये नालीकं पद्मतद्वने ॥ ५४ ॥
नायको मणिभिन्नेतृप्रधानेष्वथ नालिका ।
नाले काले चूर्णरन्ध्रे विवरे वेणुभाजने ॥ ५५ ॥
निपाकः पचने स्वेदासत्कर्मफलयोरपि ।
निर्मोको व्योम्नि सन्नाहे मोक्षके सर्पकञ्चुके ॥ ५६ ॥
नीलिका नीलिनीक्षुद्ररोगशेफालिकास्वपि ।
पराकस्तु व्रते खड्गे प्रसेकः सेचने च्युतौ ॥ ५७ ॥

१. बकुल । २. घोषक । ३. छ्म्यपि ४. ऽङ्गे । ५. ताले ।

पर्यङ्को मञ्चपर्यस्त्योः प्रतीकोऽङ्गप्रतीपयोः ।
पद्मकं पद्मकाष्ठेभबिन्दुजालकयोरपि ॥ ५८ ॥
पक्षकस्तु पार्श्वद्वारे पार्श्वमात्रेऽपि कथ्यते ।
पताकाङ्कध्वजे केतौ सौभाग्ये नाटकांशके ॥ ५९ ॥
पातुको जलमातङ्गे पतयालुप्रपातयोः ।
प्राणको जीवकतरौ सत्त्वजातीयबालयोः ॥ ६० ॥
पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके ।
वाद्यभेदे महाकिष्कौ मूलस्यावयवेऽपि च ॥ ६१ ॥
पालकं शाकभेदे स्यात्सल्लक्यां वाजिपक्षिणि[2] ।
पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके ॥ ६२ ॥
भल्लातके विडङ्गे च शोधयितृनरेऽपि च ।
पिनाकः शिवकोदण्डे पांशुवृष्टित्रिशूलयोः ॥ ६३ ॥
प्रियकस्तु चञ्चरीके नीपे काश्मीरजन्मनि ।
प्रियङ्गौ चित्रहरिणे पीतशालतरावपि ॥ ६४ ॥
पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते ।
पिष्टको नेत्ररोगे स्याद्धान्यादिचमसेऽपि च ॥ ६५ ॥
पिण्याकः कुङ्कुमे हिङ्गौ सिह्लके तिलचूर्णके ।
पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे ॥ ६६ ॥
असुराज्यां मणिदोषे गल्वर्के तालके कृमौ ।
पुलाको भक्तसिक्थे स्यात्संक्षेपासारधान्ययोः ॥ ६७ ॥
पुष्पकं मृत्तिकाङ्गारशकट्यां रत्नकङ्कणे ।
कासीसे श्रीदविमाने नेत्ररोगे रसाञ्जने ॥ ६८ ॥
लोहकांस्ये रीतिकायां पुत्रकः शरभे शठे ।
शैवे वृक्षप्रभेदे च पुत्रिका यावतूलिके ॥ ६९ ॥
पाञ्चालिकादुहित्रोश्च पूर्णकः स्वर्णचूडके ।
पूर्णिका नासिकाछिन्न्यां पृथुकश्चिपिटेऽर्भके ॥ ७० ॥
पृदाकुश्चित्रकव्याघ्रवृश्चिकेषु सरीसृपे ।

---

१. अपचये । २. व्राजि-पाजि ।

पेचकः करिलाङ्गूलमूले घूकेऽथ पेटकम् ॥ ७१ ॥
मञ्जूषायां समूहे च बहुको जलखातके[1] ।
दात्यूहे-कर्कटेऽर्के च बन्धूकः पीतसालके ॥ ७२ ॥
बन्धुजीवे, बन्धकस्तु सत्यकारेऽथ बन्धकी ।
स्वैरिण्यां च करिण्यां च बालिका कर्णभूषणे ॥ ७३ ॥
पिच्छोलायां वालुकायां बालायां, बालकः पुनः ।
शिशौ मूर्खेऽश्वगजयोर्वालधौ, भस्मकं रुजि ॥ ७४ ॥
विडङ्गे कलधौते च भ्रामकः फेरुधूर्त्तयोः ।
सूर्यावर्तेऽश्मभेदे च भालाङ्कः कच्छपे हरे ॥ ७५ ॥
महालक्षणसम्पूर्णे पूरुषे करपत्रके ।
रोहिते शाकभेदे च भूतीकं कट्फलौषधौ ॥ ७६ ॥
यवान्यां घनसारे च भूनिम्बे भूस्तृणेऽपि च ।
भूमिका रचनायां तु रूपान्तरपरिग्रहे ॥ ७७ ॥
मशकः क्षुद्ररुग्जन्तुभेदयोर्मधुकं त्रपुः ।
मधुयष्टिश्च, मधुको बन्दिश्रीवदपक्षिणोः ॥ ७८ ॥
मण्डूकी मण्डूकपर्ण्यां मण्डूकौ भेकशोणकौ ।
मल्लिको हंसभेदे स्यान्मल्लिका कुसुमान्तरे ॥ ७९ ॥
मीने मृत्पात्रभेदे च मातृका करणेश्वरे ।
मातृवर्णसमाम्नायोपमातृष्वथ मालिका ॥ ८० ॥
पक्षिमल्ले सरिद्भेदे ग्रैवेये पुष्पदामनि ।
मामकं तु मदीये स्यान्मामको मातुले स्मृतः ॥ ८१ ॥
मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके ।
मोचको मोक्तृ[2]कदलीशिग्रुद्रुमविरागिषु ॥ ८२ ॥
मोदको हर्षुके खाद्ये यमको यमजे व्रते ।
यमकं वागलङ्कारे याजको राजकुञ्जरे ॥ ८३ ॥
याज्ञिके च, युतकं तु यौतके युग्मयुक्तयोः ।
संशये चलनाग्रे स्त्रीवस्त्रभेदे पटाञ्चले ॥ ८४ ॥

---

१. खादके । २. मोच ।

रजकौ धावकौ शुक्रौ रसिका कटिसूत्रके ।
रसनायां रसालायां रल्लकः कम्बले स्मृतः ॥ ८५ ॥
तथैव कम्बलमृगे रात्रकं पञ्चरात्रके ।
रात्रकस्तु पं[1]ण्यवधूगृहान्तर्वर्षवासिनि ॥ ८६ ॥
राजिका पङ्क्तौ रेखायां केदारे राजसर्षपे ।
रुचकं तु मातुलिङ्गे[2] निष्के सौवर्चलेऽपि च ॥ ८७ ॥
रोचनायां विडङ्गे च मङ्गलद्रव्यदन्तयोः ।
अश्वस्याभरणे माल्ये प्रोत्कटेऽपि प्रकीर्तितः ॥ ८८ ॥
रूपकं नाटके प्रोक्तं[3] काव्यालङ्कारधूर्त्तयोः ।
रेणुका तु हरेण्वां स्याज्जमदग्नेश्च योषिति ॥ ८९ ॥
लम्पाको लम्पटे देशे लासकौ केकिनर्तकौ ।
लूनकस्तु पशौ भिन्ने लोचको नीलवाससि ॥ ९० ॥
कज्जले मांसपिण्डेऽक्षितारे स्त्रीभालभूषणे ।
निर्बुद्धौ कर्णिकामोचाज्याम्बुभ्रू[4]श्लथचर्मणि ॥ ९१ ॥
वराकः शोच्यरणयोर्वर्तकोऽश्वखुरे खगे ।
वञ्चको जम्बुके गेहनकुले खलधूर्तयोः ॥ ९२ ॥
वल्मीको नाकुवाल्मिक्यो रोगभेदेऽथ वर्णकः ।
विलेपने मलयजे चारणे, वसुकं पुनः ॥ ९३ ॥
रोमके, वसुकस्तु स्याच्छिवमल्ल्यर्कपर्णयोः ।
व्यलीकं व्यङ्ग्यवैलक्ष्याप्रियाकार्येषु पीडने ॥ ९४ ॥
वार्षिकं त्रायमाणायां वर्षाभवेऽथ वाल्हिकः ।
देशभेदेऽश्वभेदे च वाल्हिकं हिङ्गु कुङ्कुमम् ॥ ९५ ॥
वाल्हीकवद्वार्द्धकं तु वृद्धत्वे वृद्धकर्मणि ।
वृद्धानां समवाये च वालुकं हरिवालुके ॥ ९६ ॥
वालुका तु सिकतासु वितर्कः संशयोहयोः ।
विपाकः परिणामे स्याद् दुर्गतिस्वादुनोरपि ॥ ९७ ॥

---

१. पण । २. मातुलुङ्गे ।
३. नाटकाद्येषु । ४. प्रश्लथ ।

विवेकः पुनरेकान्ते जलद्रोणीविचारयोः ।
वृषाङ्कः साधुभल्लातशङ्करेषु महल्लके ॥ ९८ ॥
वृश्चिकस्तु द्रुणे राशावौषधे शूककीटके ।
वैजिकं कारणे शिग्रुतैले च, वैजिकोऽङ्कुरे ॥ ९९ ॥
शङ्कं वलये कम्बौ शङ्ककस्तु शिरोरुजि ।
शम्याकस्तु[1] विपाके स्याद्यचके चतुरङ्गुले ॥ १०० ॥
शम्बूको दैत्यविशेषे करिकुम्भान्तशङ्कयोः ।
शलाका शारिका शल्यः श्वाविदालेख्यकूर्चिका ॥ १०१ ॥
छत्रपञ्जरकाष्ठीषु[2] शल्लकी श्वाविधि द्रुमे ।
शार्ककः स्याद् दुग्धफेने शर्करायाश्च पिण्डके ॥ १०२ ॥
शिशुकः पादपे बाले शिशुमारेऽथ शीतकः ।
शीतकालेऽलसे स्वस्थे शूककः प्रावटे रसे ॥ १०३ ॥
स्वस्तिको मङ्गलद्रव्ये गृहभेदचतुष्कयोः ।
स्यमीकः पादपे नाकौ स्यात् स्यमीका तु नीलिका ॥ १०४ ॥
सरको मदिरापात्रे मदिरापानमद्ययोः ।
सस्यको नालिकेरान्तः सस्याकं[3]मणिखड्गयोः ॥ १०५ ॥
सम्पर्कः सुरते पृक्तौ सायको बाणखड्गयोः ।
स्थासको हस्तबिम्बे स्यात्करं[4]कादेश्च बुद्बुदे ॥ १०६ ॥
सूतकं जन्मनि रसे सूचकः शुनि दुर्जने ।
कथके सीवनद्रव्ये मार्जारे वायसेऽपि च ॥ १०७ ॥
सृदाकुर्वज्रे दावाग्नौ प्रतिसूर्ये समीरणे ।
सेवकोऽनुगे प्रसेवे सेचकः सेक्तृमेघयोः ॥ १०८ ॥
हारको गद्यविज्ञानभिदोः कितवचौरयोः ।
हुडुको मदमत्ते स्याद्दात्यूहे वाद्यभिद्यपि ॥ १०९ ॥
हेरुकस्तु महाकालगणबुद्धविशेषयोः ।

इति त्रिस्वरकान्ताः ।

गोमुखं वाद्यभाण्डे स्याल्लेपने कुटिलौकसि ॥ ११० ॥

---

१. शम्पाक । २. च । ३. सम्राभ । ४. करकोद्‌ध ।

त्रिशिखो रक्ष, स्त्रिशिखं स्यात्किरीटत्रिशूलयोः ।
दुर्मुखो मुखरे नागराजे वाजिनि वानरे ॥ १११ ॥
प्रमुखं प्रथमे मुख्ये मयूखा ज्वालरुक्त्विषः ।
विशिखा खनित्रिकायां रथ्यायां, विशिखः शरे ॥ ११२ ॥
विशाखो याचके स्कन्दे विशाख भे कठिल्लके ।
वैशाखः खजके मासे सुमुखो गरुडात्मजे ॥ ११३ ॥
पण्डिते फणिभेदे स्यात्

इति त्रिस्वरखान्ताः ।

अयोगः कठिनोद्यमे ।
विश्लेषे विधुरे कूटेऽपाङ्गो नेत्रान्तपुण्ड्रयोः ॥ ११४ ॥
अङ्गहीनेऽप्यनङ्गं खे चित्तेऽनङ्गस्तु मन्मथे ।
आभोगः परिपूर्णत्वे वरुणच्छत्रयत्नयोः ॥ ११५ ॥
आयोगो गन्धमाल्योपहारे व्यापृतिरोधयोः ।
आशुगोऽर्के शरे वायावुत्सर्गस्त्यागदानयोः ॥ ११६ ॥
वर्जने सामान्यविधावुद्वेगं पूगिकाफले ।
उद्वेगस्तूद्विजने स्यात्स्तिमिते शीघ्रगामिनि ॥ ११७ ॥
उद्वाहे च भयेऽपि स्यात् कलिङ्गो नीवृदन्तरे ।
पूतीकरञ्जे धूम्याटे स्यात्कलिङ्गा नितम्बिनी ॥ ११८ ॥
कलिङ्गं कौटजफले कालिङ्गस्तु भुजङ्गमे ।
द्विरदे भूमिकर्कारौ कालिङ्गी राजकर्कटी ॥ ११९ ॥
चक्राङ्गः श्वेतगरुति चक्राङ्गी कटुरोहिणी ।
जिह्मगो मन्दगे सर्पे तुरगो वाजिचित्तयोः ॥ १२० ॥
तुरगी त्वश्वगन्धायां धाराङ्गः खड्गतीर्थयोः ।
नरङ्गः शेफे वरण्डे नारङ्गं विटजन्मिनोः ॥ १२१ ॥
कणारसे नागरङ्गे निषङ्गस्तूणखड्गयोः ।
निसर्गः सृष्टौ स्वभावे नीलङ्गुः कृमिजातिके ॥ १२२ ॥
भम्भराल्यां प्रसूने च प्लवगः कपिभेकयोः ।

१. तीर्थखड्गयोः ।

अर्कसूते, पन्नगस्तु पद्मकाष्ठे भुजङ्गमे ॥ १२३ ॥
परागश्चन्दने रेणौ गिरौ ख्यातिपरागयोः ।
स्नानीयपुष्परजसोः पतङ्गः सूर्यपक्षिणोः ॥ १२४ ॥
पारदे शलभे शालौ पत्राङ्गं रक्तचन्दने ।
भूर्जपद्मकयोश्चापि प्रयोगो वाजिशक्रयोः ॥ १२५ ॥
यज्ञे तीर्थविशेषे च प्रयोगस्तु निदर्शने ।
कार्मणे च प्रयुक्तौ च प्रियङ्गू राजसर्षपे ॥ १२६ ॥
पिपल्यां फलिनीकङ्ग्वोः पुन्नागः पादपान्तरे ।
जातीफले नरश्रेष्ठे भुजङ्गः सर्पषिङ्गयोः ॥ १२७ ॥
मातङ्गः श्वपचो हस्ती मृदङ्गो घोषवाद्ययोः ।
रक्ताङ्गो भौमे, रक्ताङ्गं कम्पिल्ये विद्रुमेऽपि च ॥ १२८ ॥
रक्ताङ्गा जीवन्तिकायां रथाङ्गः कोकपक्षिणि ।
रथाङ्गं चक्रे, वराङ्गं योनौ शीर्षे गुडत्वचि ॥ १२९ ॥
कुङ्कुमं च विडङ्गस्तु स्यादभिज्ञकृमिघ्नयोः ।
विसर्गो विसर्जनीये वर्चसि त्यागदानयोः ॥ १३० ॥
सम्भोगो भोगरतयोः शुण्डायां, सर्वगं जले ।
सर्वगस्तु विभौ रुद्रे सारङ्गो विहगान्तरे ॥ १३१ ॥
चातके चञ्चरीके च द्विपैणशबलेषु च ।

इति त्रिस्वरगान्ताः ।

अनघः स्याद्गतपापे मनोज्ञे निर्मलेऽपि च ॥ १३२ ॥
अमोघः सफलेऽमोघा पुनः पथ्याविडङ्गयोः ।
उल्लाघो निपुणे हृष्टे शुचिनीरोगयोरपि ॥ १३३ ॥
काचिघस्तु मूषिके स्याच्छातकुम्भे छमण्डके ।
परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेऽपि च ॥ १३४ ॥
पलघः काचकलशे घटे प्रकारगोपुरे ।
प्रतिघौ रुट्प्रतीघातौ महार्घो लावकाण्डजे ॥ १३५ ॥
महामूल्येऽपि—

इति त्रिस्वरघान्ताः ।

अवीचिस्तु तरङ्गे नरकान्तरे ।
कवचस्तु तनुत्राणे पटहे नन्दिपादपे ॥ १३६ ॥
क्रकचः करपत्रे स्याद्ग्रन्थिलाख्यतरावपि ।
कणीचिः पुष्पितलतागुञ्जयोः शकटेऽपि च ॥ १३७ ॥
नमुचिर्दितिजे कामे नाराचो लोहसायके ।
जलेभे, नाराच्येषण्यां प्रपञ्चो विप्रलम्भने ॥ १३८ ॥
विस्तारे सञ्चये वापि मरीचिः कृपणे घृणौ ।
ऋषिभेदे च[1] मारीचः कल्लोले याज्ञिकद्विजे[2] ॥ १३९ ॥
रक्षोभेदेऽपि—

इति त्रिस्वरचान्ताः ।

अण्डजः स्यात्कृकिंडेऽहौ खगे झषे ।
अण्डजा मृगनाभ्यां स्यादङ्गजो मन्मथे सुते ॥ १४० ॥
मेदे केशे सुन्दरे च कम्बोजो नीवृदन्तरे ।
शङ्खहस्तिभेदयोश्च करजो नखवृक्षयोः ॥ १४१ ॥
काम्बोजः पुनरश्वानां भेदे पुन्नागपादपे ।
वलक्षखदिरे चापि काम्बोजी माषपर्णिका ॥ १४२ ॥
कारुजः कलभे फेने वल्मीके नागकेसरे ।
गैरिके शिल्पिनां चित्रे स्वयं जाततिलेऽपि च ॥ १४३ ॥
कुटजोऽगस्त्ये द्रुभेदे द्रोणे, गिरिजमभ्रके ।
शिलाजतुनि लोहे च गिरिजा मातुलुङ्ग्युमा ॥ १४४ ॥
जलजं कमले शङ्खे नीरजं पद्मकुष्ठयोः ।
परञ्जोऽसौ[3] तैलयन्त्रेच्छुरिकाफलफेनयोः ॥ १४५ ॥
बाहुजस्तु स्वयंजाते तिले क्षत्रियकीरयोः ।
भूमिजौ नरकाङ्गारौ भूमिजा जनकात्मजा ॥ १४६ ॥
वलजं गोपुरे सस्ये क्षेत्रसङ्गरयोरपि ।
सदाकारे, वलजा तु पृथिव्यां वरयोषिति ॥ १४७ ॥
वनजो मुस्तके स्तम्बे, वनजमम्बुजे ।

१. ऽथ ।　२. याजकद्विपे ।　३. ऽङ्गजं रक्ते ।

वनजा तु मुद्गपर्ण्यां सहजः सहसम्भवे ॥ १४८ ॥
निसर्गे च सामजस्तु सामोत्थे कुञ्जरेऽपि च ।
हिमजो मेनकापुत्रे हिमजा पार्वती शची ॥ १४९ ॥

इति त्रिस्वरजान्ताः ।

क्षेत्रज्ञावात्मनिपुणौ दोषज्ञः प्राज्ञवैद्ययोः ।
सर्वज्ञस्तु जिनेन्द्रे स्यात्सुगते शङ्करेऽपि च ॥ १५० ॥

इति त्रिस्वरञान्ताः ।

अवटः कूपखिलयोर्गर्ते कुहकजीविनि ।
अरिष्टो लशुने निम्बे फेनिले दैत्य[1]काकयोः ॥ १५१ ॥
अरिष्टं सूत्यगारेऽन्तश्चिह्ने तक्रे शुभेऽशुभे ।
अवटुर्गर्तान्धुघाटासूत्कटस्तीव्रमत्तयोः ॥ १५२ ॥
उच्च[2]टा दम्भचर्यायां प्रभेदे लशुनस्य च ।
करटः करिगण्डे स्यात्कुसुम्भे निन्द्यजीवने ॥ १५३ ॥
काके वाद्ये दुर्दुरूढे नवश्राद्धेऽथ कर्कटः ।
कुलीरे करणे स्त्रीणां राशौ खगेऽथ कर्कटी ॥ १५४ ॥
शाल्मलीफलवालु[3]ङ्क्योः कार्पटो जतुका[4]ऽर्थिनोः ।
कीकटः कृपणे नीचे देशभेदे तुरङ्गमे ॥ १५५ ॥
कुरण्टो झिटिकाभेदे कुरण्टी दारुपुत्रिका ।
कुक्कुटः कुक्कुभे ताम्रचूडे वह्निकणेऽपि च ॥ १५६ ॥
निषादशूद्रयोः पुत्रे कूपीटं चोदरे जले ।
चक्राटो धूर्त्ते दीनारे विषवैद्येऽथ चर्पटः ॥ १५७ ॥
चपेटे स्फारविपुले पर्पटे, चिपिटः पुनः ।
पृथुके पिच्चटे खाद्यभेदे स्याद्विस्तृतावपि ॥ १५८ ॥
चिरण्टी तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियाम् ।
जकुटं वार्ताकपुष्पे जकुटो मलये शुनि ॥ १५९ ॥
त्र्यङ्गटं शिक्यभेदे स्याद्धौताञ्जन्यामपि स्मृतम् ।
त्रिकूटं सिन्धुलक्षणे त्रिकूटः स्यात्सुवेलके ॥ १६० ॥

---

१. कंस । २. उच्चाटा । ३. वालुकी । ४. कार्थिनी ।

त्रिपुटौ तीरसंतीनौ त्रिपुटा त्रिवृदौषधौ ।
सूक्ष्मैलायां मल्लिकायां द्रोहाटो मृगलुब्धके ॥ १६१ ॥
चतुष्पदीप्रभेदे च बैडालव्रतिकेऽपि च ।
धाराटश्चातकेऽश्वे च निर्दटो निष्प्रयोजने ॥ १६२ ॥
निर्दयेऽन्यदोषरते निष्कुटो गृहवाटिका ।
केदारकः, कपाटश्च पर्पटो भेषजान्तरे ॥ १६३ ॥
पिष्टविकृतौ परीष्टिः परीक्षापरिचर्ययोः ।
स्यात्पर्क्कटी प्लक्षतरौ पूगादेर्नूतने फले ॥ १६४ ॥
पिच्चटस्तु, नेत्ररोगे पिच्चटं त्रपुसीसयोः ।
बर्वटी व्रीहिभिद्वेश्या बार्वटः कान्तिपुञ्जके ॥ १६५ ॥
वारुण्डे मकरे पोते भांकूटः शैलमीनयोः ।
भार्याटः पटहाजीवे लोभात्स्वस्त्रीसमर्पके ॥ १६६ ॥
भावटो भावके साधुनिवेशे कामुके नटे ।
मर्कटस्तु कपावूर्णनाभे स्त्रीकरणान्तरे ॥ १६७ ॥
मर्कटी करञ्जभेदः शूकशिम्बी च वानरी ।
बीजं च राजकर्कटयाः प्राचीनामलकस्य ॥ १६८ ॥
गवेधुकाफलं चापि चक्राङ्गीकरजान्तरम् ।
मोरटं त्विक्षुमूले स्यादङ्कोटकुसुमेऽपि च ॥ १६९ ॥
सप्तरात्रात्परं क्षीरे मोरटा मूर्विका मता ।
मोचाटः कदलीगर्भे चन्दने कृष्णजीरके ॥ १७० ॥
रेवटो दक्षिणावर्तशङ्खे जाङ्गुलिकेऽपि च ।
रेवटो (?) सोरटे वेणौ स्याद्वातूलवराहयोः ॥ १७१ ॥
वर्णाटो गायने चित्रकारे स्त्रीकृतजीवने ।
वरटा हंसयोषायां गन्धोल्यां, विकटः पृथौ ॥ १७२ ॥
कराले सुन्दरे वाटे वेकटो जातयौवने ।
वैकटिके मणिकारे वेरटो मिश्रनीचयोः ॥ १७३ ॥
वेरटं वदरीफले शैलाटो मृगवैरिणि ।

---

१. सल्लिकी । २. भाक्कूट । ३. पि ।

शुक्लकाचे किराते च देवले गिरिचारिणि ॥ १७४ ॥
संसृष्टं तु सङ्गते स्याच्छुद्धे च वसनादिना ।
हर्मटः कच्छपे प्रोक्तः सहस्रकिरणेऽपि च ॥ १७५ ॥

इति त्रिस्वरटान्ताः ।

अम्बष्ठो विप्रतो वैश्यातनये नीवृदन्तरे ।
अम्बष्ठा स्यादम्ललोण्यां पाठयूथिकयोरपि ॥ १७६ ॥
कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमाङ्गुलौ ।
कमठः कच्छपे दैत्यविशेषे मुनिभाजने ॥ १७७ ॥
जरठः कठिने जीर्णे नर्मठौ षिङ्गचूचुकौ ।
प्रकोष्ठः कूर्पराधस्ताद्भूपक्षान्तरेऽपि च ॥ १७८ ॥
हस्ते च त्रिस्तृतकरे प्रतिष्ठा गौरवे स्थितौ ।
छन्दोजातौ यागसिद्धौ मकुष्ठौ धान्यमन्थरौ ॥ १७९ ॥
लघिष्ठो भेलकेऽत्यल्पे स्याद्वरिष्ठस्तु तित्तिरौ ।
वरिष्ठं मरिचे ताम्रे वरोरुतमयोरपि ॥ १८० ॥
वैकुण्ठो वासवे विष्णौ श्रीकण्ठः कुरुजाङ्गले ।
शङ्करे चाऽथ साधिष्ठोऽत्यर्थे दृढतमेऽपि च ॥ १८१ ॥

इति त्रिस्वरठान्ताः ।

कारण्डो मधुकोशेऽसौ कारण्डं वेदलाण्डके ।
कूष्माण्डौ गणकर्कारू कूष्माण्डी त्वम्बिकौषधी ॥ १८२ ॥
कोदण्डं कार्मुके देशभेदभ्रूलतयोरपि ।
गारुडं स्यान्मरकते विषशास्त्रे विषोद्भवे ॥ १८३ ॥
तरण्डो बडिशीसूत्रबद्धस्तुनि भेलके ।
तित्तिडो दैत्यभेदे स्याद्यमदासेऽथ तित्तडी ॥ १८४ ॥
कालदासे पादपे च तिन्तिडी चुक्रचिञ्चयोः ।
द्राविडो वेधमुख्ये स्यान्नीवृदन्तरशङ्खयोः ॥ १८५ ॥
निर्गुण्डी नीलशेफाली सिन्दुवारोऽब्जकन्दकः ।
प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनी ॥ १८६ ॥
प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः ।

पिचण्डो जठरे प्रोक्तः पशोरवयवेऽपि च ॥ १८७ ॥
पूत्यण्डः स्याद्गन्धमृगे सर्पभिद्गन्धकीटयोः ।
भेरुण्डौ भीषणखगौ भेरुण्डा देवताभिदि ॥ १८८ ॥
मारुण्डस्तु भुजङ्गाण्डे मार्गे गोमयमण्डले ।
मार्तण्डस्त्वरणौ क्रोडे वरण्डो वदनव्यथा ॥ १८९ ॥
अन्तरावेदिसङ्घौ च वरण्डा शारिका छुरी[1] ।
वर्त्ति, वारुण्डस्तु कर्णदृब्मले सेकभाजने ॥ १९० ॥
फणिराजद्वारपिण्ड्योर्वारुण्डः खग उद्रिणि (?) ।
वितण्डा वातभेदे स्यात्कचीशाके शिलाह्वये ॥१९१ ॥
करवीर्यामपि प्रोक्तः शिखण्डो बर्हिचूडयोः ।
सरण्डः स्यात्कृकलासे भूषणान्तरधूर्त्तयोः ॥ १९२ ॥
सपिण्डस्तनये प्रोक्तो दायादे सदृशेऽपि च ।

इति त्रिस्वरडान्ताः ।

अध्यूढ ईश्वरे,ऽध्यूढा कृतसापत्न्ययोषिति ॥ १९३ ॥
आषाढो व्रतिनां दण्डे मासे च मलयाचले ।
उपोढ ऊढे निकटेऽप्युदूढः पीवरोढयोः ॥ १९४ ॥
प्ररूढो जठरे वृद्धे प्रगाढो दृढकृच्छ्रयोः ।
वारूढः शम्बले वस्त्राञ्चलेऽग्नौ पञ्जरेऽररे[2] ॥ १९५ ॥
विरूढोऽङ्कुरिते जाते विगूढो गुह्यगुप्तयोः ।
समूढं पुञ्जिते भुग्ने सद्योजातेऽनुपप्लवे[3] ॥ १९६ ॥
संरूढोऽङ्कुरिते प्रौढे समीढो मूत्रिते घने ।

इति त्रिस्वरढान्ताः ।

अभीक्ष्णं तु भृशे नित्येऽप्यरुणोऽनूरुसूर्ययोः ॥ १९७ ॥
सन्ध्यारागे बुधे कुष्ठे निःशब्दाव्यक्तरागयोः ।
व्याकुले कपिले वर्णे रक्तवर्णेऽपि वाच्यवत् ॥ १९८ ॥
अरुणा त्रिवृताश्यामामञ्जिष्ठाऽतिविषासु च ।
अरणिस्तु भवेदग्निमन्थे निर्मन्थ्यदारुणि ॥ १९९ ॥

---

१. क्षुरी । २. ऽरणे । ३. उपप्लुते ।

इन्द्राणी तु शचीसिन्दुवारयोः करणे स्त्रियाः ।
इरिणं तूषरे शून्येऽपीक्षणं दर्शने दृशि ॥ २०० ॥
उषणा तु कणायां स्यादूषणं मरिचे मतम् ।
एषणी व्रतमार्गानुसारिण्यां च तुलाभिदि ॥ २०१ ॥
कङ्कणं करभूषायां हस्तसूत्रे च शेखरे ।
कत्तृणं रौहिषं फञ्जा कल्याणं हेम्नि मङ्गले ॥ २०२ ॥
करणः शूद्रयां विट्पुत्रे करणं क्षेत्रगात्रयोः ।
गीताङ्गहारसंवेशभिक्षुकायस्थसंहतौ ॥ २०३ ॥
वर्णानां स्पष्टतादौ च योगिनामासनादिषु ।
हृषीके साधकतमे बवादौ च कृतावपि ॥ २०४ ॥
करुणा तु कृपायां स्यात् करुणो रसवृक्षयोः ।
करेणुर्गजहस्तिन्योः कर्णिकारतरावपि ॥ २०५ ॥
कारणं घातने हेतौ करणे, कारणा पुनः ।
यातना, कार्मणं मन्त्रादियोगे कर्मकारके ॥ २०६ ॥
काकिणी मानदण्डे स्यात्तुरीयांशे पणस्य च ।
कृष्णलायां वराटे च कृपाणी कर्त्तरी छुरी ॥ २०७ ॥
कृपाणोऽसौ, क्षेपणी तु नौदण्डजालभेदयोः ।
कोङ्कणः स्याज्जनपदे कोङ्कणं त्वायुधान्तरे ॥ २०९ ॥
ग्रहणं स्वीकृतौ वन्द्यां धीगुणे शब्द आदरे ।
ग्रहोपरागे प्रत्याये ग्रहणी तु रुगन्तरम् ॥ २१० ॥
ग्रामणीर्भोगिके पत्यौ प्रधाने क्षुरमर्दिनि ।
ग्रामिणीः पण्ययोषा स्याद्ग्रामेयीनीलिकाऽपि च ॥ २११ ॥
गोकर्णोऽश्वतरे सर्पे मृगभेदे गणान्तरे ।
अङ्गुष्ठाऽनामिकोन्माने गोकर्णी मूर्विकौषधौ ॥ २१२ ॥
चरणो बह्वृचादौ स्यात्पादे च मूलगोत्रयोः ।
चरणं भ्रमणे भक्षे रासभस्य ध्वनावपि ॥ २१३ ॥
जारणो रुचके हिङ्गौ जीरके कृष्णजीरके ।
तरुणः कुब्जपुष्पे स्यादेरण्डे यूनि नूतने ॥ २१४ ॥

तरणिस्तरणेऽर्केऽशौ कुमार्योषधिनौकयोः ।
यष्ठावद्धौ, (१) दक्षिणस्तु परच्छन्दानुवर्तिनि ॥ २१५ ॥
दक्षेऽपसव्ये सरलेऽप्राचीनेऽप्यथ दक्षिणा ।
दिक् प्रतिष्ठा यज्ञदानं द्रविणं काञ्चने धने ॥ २१६ ॥
पराक्रमे बलेऽपि स्यात् द्रुघणः पर्शुवेधसोः ।
मुद्गरेऽप्यथ दुर्वर्णं कलधौतकुवर्णयोः ॥ २१७ ॥
दौर्वीणं मृष्टपर्णे स्याद्धरितालीरसेऽपि च ।
धरणोऽहिपतौ लोके स्तने धान्ये दिवाकरे ॥ २१८ ॥
धरणं धारणे मानविशेषे, धरणी भुवि ।
धारणः सलिले स्वर्गे परमेष्ठिनि, धर्मणः ॥ २१९ ॥
सर्पभेदे वृक्षभेदे धर्षिणी त्वभिसारिका ।
धर्षणं स्यात्परिभवे धारिणी नाडिकादिभिः ॥ २२० ॥
धारणा स्यात्तु योगाङ्गे धारणं ग्रहणे मतम् ।
धिषणस्त्रिदशाचार्ये धिषणा तु मनीषिका ॥ २२१ ॥
निर्याणं निर्गमे मोक्षगजापाङ्गप्रदेशयोः ।
निर्वाणं मोक्षनिर्वृत्योर्विघाते करिमज्जने ॥ २२२ ॥
निर्माणं सारनिर्मित्योः कर्मभेदे समञ्जसे ।
निःश्रेणिरधिरोहिण्यां खर्जूरीपादपेऽपि च ॥ २२३ ॥
प्रघणोऽलिन्दके ताम्रकलशे लोहमुद्गरे ।
प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे ॥ २२४ ॥
आयत्ते च प्रमाणं तु मर्यादासत्यवादिनोः ।
प्रमातर्येकतेयत्तानित्येषु हेतुशास्त्रयोः ॥ २२५ ॥
पत्रोर्णं धौतकौशे[२]यं पत्रोर्णः शोणकद्रुमे ।
पक्षिणी पूर्णिमाखग्योः शाकिनीरात्रिभेदयोः ॥ २२६ ॥
प्रवेणिर्वेणिकुथयोः पुराणं प्रत्नशास्त्रयोः ।
पुराणः षोडशपणे पुरणं [३]वानतन्तुषु ॥ २२७ ॥
पूरके पिष्टभेदे च पूरणी शाल्मलिद्रुमे ।

---

१. रतेऽभिभवे । २. कौशेये । ३. पटारम्भकसूत्रेषु ।

प्रोक्षणं सेकवधयोर्भरणं वेतने भृतौ ॥ २२८ ॥
भरणी शोणके भे च श्रमणी स्याद्धीशितुः ।
क्रीडादौ कारुण्डिकायां भीषणं सल्लकीरसे ॥ २२९ ॥
भीषणो दारुणे गाढे मत्कुणोऽश्मश्रुपूरुषे ।
उद्दंशे नालिकेरे च निर्विषाणगजेऽपि च ॥ २३० ॥
मसृणोऽकठिने स्निग्धे मसृणा स्यादतस्यपि ।
मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि ॥ २३१ ॥
यन्त्रणं बन्धने त्राणे नियमे, रमणं पुनः ।
पटोलमूले जघने रमणो रासभे प्रिये ॥ २३२ ॥
रोषणो रोषणे हेमघर्षे पारद ऊषरे ।
रोहिणी सोमवल्के भे कण्ठरोगोभयोर्गवि ॥ २३३ ॥
लोहिताकटुरोहिण्योर्लवणो राक्षसे रसे ।
अस्थिभेदे, लवणा त्विड्, लक्षणं नामचिह्नयोः ॥ २३४ ॥
लक्ष्मणं च लक्षणस्तु सौमित्रौ लक्ष्मणो यथा ।
लक्ष्मणः श्रीयुते, लक्ष्मणौषधौ सारसस्त्रियाम् ॥ २३५ ॥
वरुणोऽर्केऽप्पतौ वृक्षे वरणे वरुणद्रुमे ।
प्राकारे, वरणं वृत्यां वारणः स्यान्मतङ्गजे ॥ २३६ ॥
वारणं तु प्रतिषेधे ब्राह्मणं विप्रसंहतौ ।
वेदे च ब्राह्मणो विप्रो ब्राह्मणी वाडवस्त्रियाम् ॥ २३७ ॥
स्पृक्कायां फञ्जिकायां च वारुणी पश्चिमा सुरा ।
गण्डदूर्वा, विषाणं तु शृङ्गे कोलेभदन्तयोः ॥ २३८ ॥
विषाणी मेषशृङ्ग्यां स्याद्विपणिः पण्यहट्टयोः ।
पण्यवीथ्यां, श्रमणस्तु निर्ग्रन्थे निन्द्यजीविनि ॥ २३९ ॥
श्रमणा सुलता मांसी मुण्डीरी च सुदर्शना ।
श्रवणो नक्षत्रभेदे श्रवणं श्रवसि श्रुतौ ॥ २४० ॥
शरणं रक्षणे गेहे वधरक्षकयोरपि ।
श्रावणो मासि पाखण्डे, दध्यालयां श्रावणा मता ॥ २४१ ॥

१. ऽगाढे । २. रोषारक्ते क्रोधने । ३. अब्धि ।

श्रीपर्णस्त्वग्निमन्थेऽब्जे श्रीपर्णी शाल्मली हठे ।
सङ्कीर्णो निचितेऽशुद्धौ सरणिः श्रेणिमार्गयोः ॥ २४२ ॥
सारणः स्यादतीसारे दशकन्धरमन्त्रिणि ।
सारणी त्वल्पसरिति प्रसारण्योषधावपि ॥ २४३ ॥
सिङ्घाणं तु घ्राणमलेऽयःकिट्टे काचभाजने ।
सुषेणो विष्णुसुग्रीववैद्ययोः करमर्दके ॥ २४४ ॥
सुवर्णं काञ्चने कर्षे सुवर्णालौ मखान्तरे ।
कृष्णागुरुणि बिंस्ते च सुपर्णः कृतमालके ॥ २४५ ॥
गरुडे स्वर्णचूडे च सुपर्णा विनताऽब्जिनी ।
हरणं यौतकद्रव्येऽप्यङ्गहारे भुजे हृतौ ॥ २४६ ॥
हरिणौ पाण्डुसारङ्गौ हरिणी चारुयोषिति ।
सुवर्णप्रतिमायां च हरितावृत्तभेदयोः ॥ २४७ ॥
हर्षणं श्राद्धदेवे च हर्षके योगरुग्भिदोः ।
हरेणुः कुलयोषायां रेणुकायां सतीनके ॥ २४८ ॥
हिरणं हिरण्यमिव वराटे हेम्नि रेतसि ।

इति त्रिस्वरणान्ताः ।

अमृतं यज्ञशेषाम्बुसुधामोक्षेष्वयाचिते ॥ २४९ ॥
अन्नकाञ्चनयोर्जग्धौ खे स्वादुनि रसायने ।
घृते हृद्ये गोचरे[2] चाऽमृतो धन्वन्तरौ सुरे ॥ २५० ॥
अमृताऽऽमलकापथ्यागूडूचीमाधवीषु[3] च ।
अनृतं कर्षणेऽलीके चाऽक्षतः स्यादहिंसिते ॥ २५१ ॥
षण्ढे लाजेष्वर्दितं तु वातव्याधौ हतेऽर्थिते ।
अजितस्तीर्थकृद्भेदे बुद्धे विष्णावनिर्जिते ॥ २५२ ॥
अच्युतो द्वादशस्वर्गे केशवाऽभ्रष्टयोरपि ।
अव्यक्तं प्रकृतावात्मन्यव्यक्तोऽस्फुटमूर्खयोः ॥ २५३ ॥
अनन्तं खे निरवधावनन्तस्तीर्थकृद्भिदि ।
विष्णौ शेषेऽप्यनन्ता तु गुडूची भूर्दुरालभा ॥ २५४ ॥

---

१. वित्ते । २. गोरसे । ३. मागधी ।

विशल्या लाङ्गली दूर्वा शारिवा हैमवत्यपि ।
अश्मन्तमशुभे क्षेत्रे चुल्यामनवधौ मृतौ ॥ २५५ ॥
अमतिः काले चन्द्रे स्यादङ्कतिश्चिंन्हवेधसोः ।
अग्निहोत्रिण्यगस्तिर्दुमुन्योः, स्याददितिर्भुवि ॥ २५६ ॥
देवमातरि पार्वत्यामंहतिस्त्यागरोगयोः ।
आपातः पाते तत्कालेऽप्यादृतः सादरेऽर्चिते ॥ २५७ ॥
आख्यातं भाषिते त्यादावाघ्रातं ग्रस्तशिङ्किते ।
आप्लुतः स्नातके स्नातेऽप्यावर्तः पयसां भ्रमे ॥ २५८ ॥
आवर्तने चिन्तने चाऽनर्त्तो जनपदे जने ।
समरे नृत्यशालायामाहतं तु मृषार्थके ॥ २५९ ॥
गुणिते ताडिते चाप्याध्मातः शब्दितदग्धयोः ।
वातरोगेऽप्यथाऽऽस्फोतः कोविदारार्कपर्णयोः ॥ २६० ॥
आस्फोता गिरिकर्ण्यां तु वनमाल्यामथाऽऽचितः ।
छादिते शकटोन्मेये पलानामयुतद्वये ॥ २६१ ॥
सङ्गृहीतेऽप्यथाऽऽयस्तः क्लिशिते तेजिते हते ।
क्रुद्धे क्षिप्तेऽथाऽऽयतिः स्यात्प्रभावोत्तरकालयोः ॥ २६२ ॥
दैर्घ्यसङ्गेऽप्याकृतिस्तु जातौ रूपे वपुष्यपि ।
आयत्तिर्वासरे स्नेहे वाशित्वे स्थाम्नि सीम्नि च ॥ २६३ ॥
आसत्तिः सङ्गमे लाभेऽप्यापत्तिः प्राप्तिदोषयोः ।
आपद्यपीङ्गितं तु स्याच्चेष्टायां गमनेऽपि च ॥ २६४ ॥
उत्तप्तं चञ्चले शुष्कमांससन्तप्तयोरपि ।
उचितं विदितेऽभ्यस्ते मिते युक्तेऽप्यथोत्थितम् ॥ २६५ ॥
वृद्धिमत्प्रोद्यतोत्पन्नेषूदितं तूद्गतोक्तयोः ।
उद्धृतं स्यादतुलिते परिभुक्तोज्झितेऽपि च ॥ २६६ ॥
उषितं व्युषिते प्लुष्टेऽप्युच्छ्रितं तूच्चजातयोः ।
प्रवृद्धे स्यादथोद्वान्त उद्गीर्णे निर्मदद्विपे ॥ २६७ ॥
उदात्तो दातृमहतोर्हृद्ये च स्वरभिद्यपि ।

---

१. वह्नि । २. च । ३. क्लेशिते । ४. न्युषिते ।

उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः ॥ २६८ ॥
उदन्तः साधौ वार्तायामुद्धातः समुपक्रमे ।
मुद्गरेऽभ्यासयोगाय कुम्भकादित्रयेऽपि च ॥ २६९ ॥
पादस्खलन उत्तुङ्गेऽप्युन्नतिस्तार्क्ष्ययोषिति ।
उदग्रे च समृद्धौ चाप्येधतुर्नरि पावके ॥ २७० ॥
क्रन्दितो रुदिते हूतौ कलितं विदिताप्तयोः ।
कपोतः पारावते स्यात्कवकाख्यविहङ्गमे ॥ २७१ ॥
कापोतं यामुने खर्ज्यां कपोतानाञ्च संहतौ ।
किरातः स्यादल्पतनौ भूनिम्बम्लेच्छयोरपि ॥ २७२ ॥
किराती कुट्टिनी गङ्गा कृतान्तोऽक्षेमकर्मणि ।
सिद्धान्तयमदैवेषु गर्जितो मत्तकुञ्जरे ॥ २७३ ॥
गर्जितं जलदध्वाने ग्रन्थितं हतदब्धयोः ।
आक्रान्ते च गरुत्मांस्तु विहगे पन्नगाशने ॥ २७४ ॥
गभस्तिः स्याद्दिनकरे स्वाहाकिरणयोरपि ।
गोदन्तो हरिताले स्यात्सन्नद्धे दंशितेऽपि च ॥ २७५ ॥
गोपतिः शङ्करे षण्ढे नृपतौ त्रिदशाधिपे ।
सहस्रकिरणे चापि ज्वलितौ दग्धभास्करौ ॥ २७६ ॥
जयन्तावैन्द्रिगिरिशौ जयन्त्युमापताकयोः ।
जीवन्त्यामिन्द्रपुत्र्यां च जगती छन्दसि क्षितौ ॥ २७७ ॥
जम्बूवप्रे जने लोके जामाता दुहितुः पतौ ।
सूर्यावर्ते वल्लभे च जिमूतो वासवेऽम्बुदे ॥ २७८ ॥
घोषकेऽद्रौ भृतिकरे जीवन्ति शमिवन्दयोः ।
जीवन्यां च गुडूच्यां च जीवातुर्जीवनौषधे ॥ २७९ ॥
जीविते च जृम्भितं तु प्रवृद्धे च विचेष्टिते ।
जृम्भायां स्फुटिते चापि त्वरितं वेगतद्वतोः ॥ २८० ॥
तालितं स्तनिते वस्त्रे वाद्यभाण्डे गुणे स्तृतौ ।
त्रिगर्तो गणिते देशे त्रिगर्ता कामुकस्त्रियाम् ॥ २८१ ॥

---

१. उन्नमे । २. उदये । ३. त्रिदशाप्यतौ । ४. भास्वरौ ।

घुर्घुयामथ तृणता तृणत्वे कार्मुकेऽपि च ।
दंशितो वर्मिते दष्टे स्रवन्ती च द्रवन्त्यपि ॥ २८२ ॥
नद्यामोषधिभेदे च द्विजातिर्ब्राह्मणेऽण्डजे ।
दुर्जातं व्यसनासम्यग्जातयोरथ दुर्गतिः ॥ २८३ ॥
दारिद्र्ये नरके[1] चापि दृष्टान्तः स्यादुदाहृतौ ।
शास्त्रेऽथ निकृतं विप्रलब्धे विप्रकृतेऽधमे ॥ २८४ ॥
निरस्तः प्रेरितशरे सन्त्यक्ते त्वरितोदिते ।
निष्ठ्यूते प्रतिहते च निमित्तं हेतुलक्ष्मणोः ॥ २८५ ॥
निवातो वातरहिते दृढसन्नाह आश्रये ।
निर्मुक्तो मुक्तनिर्मोकभुजगे निष्परिग्रहे ॥ २८६ ॥
निशान्तं सदने शान्ते प्रभातेऽप्यथ निर्वृतिः ।
मोक्षे मृत्यौ[2] सुखे सौस्थे निकृतिः शटशाठ्ययोः ॥ २८७ ॥
भर्त्सनेऽभिभवे क्षेपे निर्ऋतिर्निरुपद्रवे ।
अलक्ष्म्यां दिक्पतौ चापि नियती दैवसंयमौ ॥ २८८ ॥
प्रभूतमुद्गते[3] प्राज्ये प्रसूतं जातपुष्पयोः ।
प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः ॥ २८९ ॥
प्रहतं विस्तृते क्षुण्णे[4] पलितं पङ्कतापयोः ।
पक्वकेशे शैलजाते पण्डितः सिह्लधीमतोः ॥ २९० ॥
प्रणीत उपसम्पन्ने कृते क्षिप्ते प्रवेशिते ।
संस्कृताग्नौ च पर्याप्तं शक्ते[5] तृप्तौ निवारणे ॥ २९१ ॥
यथेष्टे दोषे कृच्छ्रे च पर्याप्तिः परिरक्षणे ।
प्राप्ते कामे, प्रसृतोऽर्द्धाञ्जलौ वेगिविनीतयोः ॥ २९२ ॥
तते च प्रसृता जङ्घा प्रमीतं प्रोक्षिते मृते ।
पर्यस्तं तु हते स्रस्ते प्रपातो [6]निर्झरे भृगौ ॥ २९३ ॥
अवटे पतने कच्छे पक्षतिः प्रतिपत्तिथौ ।
पक्षमूले, पर्वतस्तु देवर्षौ धरणीधरे ॥ २९४ ॥

---

१. नरके निःस्वतायां च । २. पुष्टौ । ३. मुत्सवे । ४. क्षु-(ध्वे) ब्धे । ५. पूर्णे । ६. सौप्तिके ।

